# दिव्यज्योतिः

संस्कृतस्य सचित्र मासिकम्



## पावनचरितस्मरणम्

वाल्मीकि






यो भारतेऽत्र प्रथितः प्रथमो महीयान्
आद्योऽस्ति काव्यकुसुमाकरसम्प्रदाता ।
रामस्य पुण्यतमचित्र – चरित्रणाढ्ये
धन्यञ्चकार सकलं भुवनं स्ववाचा ॥
तं सादरं स्मरत रे किल संस्कृतज्ञाः ?
येनास्ति दत्तमतिपुण्यतमं हि काव्यम् ।
रामायणाख्यमतिख्याततमं हि लोके
यद् भारतीयजनमानसमूलरूपम् ॥



वर्षम् ३५ शिमला अक्तूबर १९९०-९१ अङ्कः

# विषयानुक्रमः



## दिव्यज्योतिः

हि० क० सं०भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकागतमुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति ।

हिमाचल प्रदेश—पंजाब-हरियाणा-जम्मूकश्मीर - मध्य प्रदेश—राजस्थान—महाराष्ट्र-उत्तरप्रदेश शासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।

### पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरससुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकल कलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशितं भवति पत्रस्य वार्षिक मूल्य ३० रु० अर्धवार्षिकं १५ रु० एकस्याङ्कस्य च रु० २-५० भवति ।
वर्षारम्भः अक्तूबर—मासतः भवति । ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति ।
ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोबरा, शिमला-१७१००७ हि० प्र०" इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

### परिचयः


संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, — दूरभाषः 78459
राष्ट्रपतिसम्मानिताः

प्रधानसम्पादकः— आचार्य केशव शर्मा एम. ए., एम, फिल, साहित्यरत्नम् – ,, 8 200
दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-७ (हि. प्र )
मुद्रकः प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७, शिमला (हि. प्र.)
स्वामी:- श्रीमती आचार्य रत्नकुमारी शर्मा

# प्रियदर्शिनी

## (गद्यानुवाद)

आसन् । जवाहरोऽपि यदा किमपि - उपायनमानयति तत्पुस्तकान्येव प्रायेण भवन्ति । देशस्य विभिन्नभागेभ्य: पुस्तकप्रकाशका: लेखकाश्च उपहारप्रतय: जवाहरायावश्यं प्रेषयन्ति स्म । तानि सर्वाण्यपि पुस्तकानि सा पपाठ । परन्तु कदाचित्सा पुस्तकाध्ययनेनापि श्रान्ता अभवत् । सा किमपि विशिष्टकार्यं चिकीर्षति स्म ।

आन्दोलनं प्रतिदिनं वर्धमानमासीत् । लवपुरे जवाहरलालेन यदा पूर्णस्वतन्त्रताया: घोषणा कृतासीत् -तत्क्षणमिन्दिरा सर्वदा स्मरति स्म। तस्या मनसि अपि एक: उल्लास:, एका तीव्रेच्छा आसीत् । तयापि स्वकृते कांग्रेसस्वयंसेवकानां वस्त्राणि निर्मापितानि । टोपिकात:- आजानुलम्बमानमधोवस्त्रमपि । यदा कांग्रेसस्य विशिष्टजना: समायान्ति स्म तदा ते इन्दिरां तस्मिन् वेषे दृष्ट्वा बालकोऽयमिति जानन्ति स्म । मोतीलालोऽपि तां "मम पौत्रोऽयमिति" शब्दैरेव तस्या परिचयं लोकेभ्यो ददाति स्म । इन्दिरा नव नव वेषभूषाधारणे ऽधिकां रुचिं धारयतिस्म । एकदा तया पञ्चाम्बु प्रान्तीयो वेषो धारित: शिरसि दुकूलं दृष्ट्वा तां केचन आगन्तुका अपृच्छन् तव भ्राता क्वास्ते ? लवपुरात् - जवाहर: गृहमागत आसीत् । स्वीये कक्षेऽसौ किमपि महत्वपूर्णविषयं लिखति स्म । तदासीत् स्वतन्त्रतादिवसशपथम् । प्रियदर्शिनी - अपि तन्निर्माणमलोकयत् । यदा तत्पूर्तिमगात्तु जवाहरेण इन्दिरा तस्योच्चस्वरेण पठनायाज्ञप्ता । पठन्त्या: प्रियदर्शिन्या: सुन्दरस्वरेषु - ऐतिहासिकगुंजनं तेषां शब्दानामजायत ।

"अस्माकं विश्वासोऽस्ति यदन्यदेशवत्-अस्माकं भारतीयानामपि एष जन्मसिद्धोऽधिकार: यद्वयं स्वतन्त्रा भवेम । वयमपि स्वपरिश्रमस्य फलास्वादनं कुर्यास्म । अत्रत्यजनानामयमपि अधिकारो ऽस्ति यत्ते तादृशं शासनं परिवर्तयेयुर्यत्तेषामधिकारहननं कुर्यात् ।"

'अन्तिमखण्डं पठन्ती च सा एवं पपाठ:— एषोऽस्ति घोरापराधो मानवं प्रति ईश्वरं प्रति च यद्येन शासनेनास्माकं देशे महीयानयमत्याचार: कृतस्तच्छासनमत्र चिराय तिष्ठेत " एतत्पठन्त्या प्रियदर्शिन्या लोचने केनाप्यपूर्वप्रकाशेन प्रोद्दीप्ते जाते । जवाहरोऽवादीत्—



"प्रियदर्शिनि ! त्वया सर्वमिदमुच्चैस्तरां पठितमतस्त्वमपि शपथे ऽस्मिन्-निबद्धासि जाता ।"

एवमेव च सापि येन मार्गेण तत्पितामहपिताऽन्ये च पारिवारिका गतास्तदेव मार्गं तस्या अपि वर्तते - इति निश्चयमकरोत् । ते सर्वेऽपि सम्बन्धिनस्तस्या कारागारेषु निबद्धाः आसन् - यै रांग्लानां घृणितनियमोल्लघनं कृतमासीत्. सत्याग्रहो विहितः, येषां च गृहाणि गृहवस्तूनि कपर्दिकामूल्येन लुण्ठितानि जाल्मैः आंग्लप्रशासकैः । सा इदानीमेकला स्वगृहे स्वक्रीडकानां पुस्तकानाञ्च मध्ये व्यराजत ।

कमलाया चिकित्साप्रसङ्गेन जवाहरः स्विटजरलैण्ड गतः समुद्रपोतेन प्रियदर्शिनी अपि सहैवासीत् । पोतोपरि प्रियदर्शिनी स्वपित्रा सह क्रीड़नमधिकसुखकरममन्यत । साऽन्यबालैः साकं नाक्रीड़त् । यतोहि बहुकालं पश्चात्तु तया स्वपिता प्राप्तः आसीत् । इदानीं तस्योपरि तस्या एकाधिकारः आसीत् । स्विट्जरलैण्डे आभ्यां सुन्दरपर्वतोपत्यकास्तड़ागाश्च सुन्दरतमाः समवलोकिताः । अत्रैव कमलाया यक्ष्मारोगस्य चिकित्सा भवति स्म । स्वजीवने प्रथमहिमपातदर्शनं तया तत्रैव कृतम् तद्दृष्ट्वा सा मन्त्रमुग्धा जाता । उष्णवस्त्राणि धारयित्वा सा हिमक्रीडायां लग्नाऽभूत् । सर्वाश्च हिमक्रीडास्तया तत्र सम्यक् शिक्षिता ।

लंदन-बर्लिन पेरिसादि-नगराणामपि दर्शनं तया तदानीं स्वपित्रा सह कृतम् । तत्रत्यप्रवासीयगृहाणि (होटल) आनन्दभवनादपि सुन्दराणि - आसन् । तथैव मार्गाण्यपि अति स्वच्छानि दीर्घाणि पक्वानि चासन् । तया प्रयागस्य त्रुटितस्फुटित-मार्गैः साकमेषां तुलना कृता । तत्रत्यसुन्दरकारयानानां ये ऽनवरतमितस्ततश्चलन्तिस्म — प्रयागस्य मुमूर्षुभिः रथाश्वैः सह तेषां साम्यमपि साऽकरोत् । भिक्षुकाणां, कुष्ठीनां, दुर्गन्धितनालिकासु क्रीडापराणां भारतीयबालानां सा स्मरणं चकार । एवं नासीत् - यत्तत्र निर्धनता, मलिनता च न वर्तते स्म । प्रसिद्धस्थानेभ्यो वहिस्तत्रापि तादृशी स्थितिरासीत् परन्तु भारतात् - शोभनां । आपणानि बहुमूल्यवस्तुभिर्दीप्यमानानि आसन् । जवाहरस्तत्रत्य चाकचक्यविषये प्रियदर्शिनीमबोधयत् । इयं सम्पत्तिरेतैर्भारत-

सदृशदेशान् परतन्त्रान् कृत्वा तेभ्यो लुण्ठिता वर्तते लन्दने पेरिसेऽपि दुर्गन्धितान्धकारपूर्णगृहाणि वाह्यभागेषु बाहुल्येनासन् । अतस्तेऽपि-पाश्चात्याः निर्धनताशोषणग्रस्ताः आसन् । नात्र सन्देहस्तत्रापि प्रियदर्शिन्या नामांकनपाठशालात्रय्यां कृतमभूत् । जिनेवाया अन्ताराष्ट्रियपाठशाला, वेक्सस्य एकोल नूवेल, इत्यादयः ।

एवं कदाचित् - एकला, उदासीना कदाचिच्च समायाते पितरि सुप्रसन्ना दिनानि व्यत्यापयत् प्रियदर्शिनी । यदा समयो लगति जवाहरलालस्तां विशिष्टविभूतिभिः साकं मेलनाय नयति स्म । फ्रांसेदेशीयस्य रोम्यां रोला आंग्लो बर्नार्डशा अमेरिकीयः आइन्स्टाईनः, एतेषामनेकेषाञ्च अन्यविभूतीना दर्शनानि सा बाल्य एवाकरोत् । तैः साकं जवाहरस्य वार्तालापं सा सावधानतयाऽश्रृणोत् । एतदपि चास्या शिक्षाया एवैकाङ्गो जातः । विदेशीयविद्यालयेषु यदा प्रियदर्शिनी तत्रत्यबालानां, छात्राणां ज्ञानं वाऽवलोकयति स्म सा तेषामल्पज्ञानं प्रति हसति स्म यथा तस्या पिता हैरोविश्वविद्यालये तत्रत्यछात्राणां योग्यतायामुपहसति स्म । तथाप्यत्र तादृशानां लोकानां न्यूनता नास्ति ये तदानीमपि - अद्यापि च भारतीयेभ्यश्चतुरान् भणन्ति स्म ।

अथ १९२७ खीष्टाब्दीयफर्वरीमासे जवाहरलालः भारतीयकांग्रेसदलस्य प्रतिनिधिरूपेण ब्रूसेल्से उत्पीडितजातीनां सम्मेलने भागग्रहणाय गतः यदाऽसौ स्वगृहं पुनरायातस्तस्मात् स्थानात्तु तेन सर्वमपि स्वपरिवारे वर्णितम् यत् - जावा, इण्डोचाइनाफिलिस्तीन-सीरिया-मिस्रादिदेशानां संगठनानां प्रतिनिधिभिस्तथा च उत्तरीय-अफ्रीकाया अरबदेशानां संगठनप्रतिनिधिभिः तथा च योरप - अमरीकाद्वीपयोः वामपन्थिश्रमिकसंघटन—प्रतिनिधिभिः साकमपि असौ वार्तालापमकरोत् - सर्वैश्च तैःनेहरूमहोदयस्य सहयोगस्तत्र साम्राज्यवाद- समुन्मूलनाय कृतः । इन्दिरा यद्यपि सर्वमिदं पूर्णतः ज्ञातुं तदानीं शक्ता नासीत्तथापि सा सारं जग्राह यत्सर्वं तत्र शोभनमेव जातम् । यतोहि नेहरू स्वविचारान् - प्रकटयन् प्रसन्नमुद्रायामासीत् ।

तत्पश्चात् सर्वोऽपि परिवारः रूसदेशं गतः तस्य दशमस्वतन्त्रतादिवसे भागग्रहणाय । इन्दिरा तत्र न गता । तथापि जवाहरलालस्ततो

निवृत्तः सन् सर्वं वर्णयामास श्रावयामास च इन्दिराम् । एवं बाल्य एव इन्दिराया विश्वसम्बन्धिज्ञानं कथं किल वृद्धिमुपगतं स्यादिति पाठकाः स्वयं निर्णेतुं शक्नुवन्ति । निखिलविश्वमेव तस्या पाठशाला अभूत ।

त्रयोदशवर्षीया अपि नासीत - इन्दिरा सा तत्कालीनकांग्रेस-संस्थायाः-स्वराज्यभवने गता । इदं भवनं कार्यालयाय मोतीलालेनैव प्रदत्तमासीत् । अत्र सापि सदस्या भवितुमप्रार्थयत् । परन्तु तत्रस्थेनाधिकारिणा कथितं यत् नाधुना भवती सदस्या भवितुमर्हति एकविंशति वर्षीया एव सदस्या भवितुमर्हन्ति । न्यूनातिन्यूनमष्टादशवर्षदेशीयाः । प्रियदर्शिनी सक्रोधमाह - अस्तु - षड्वर्षोपरान्तमहमत्रागमिष्यामि । अनया घटनया इन्दिरा पृथक् - बालानां संस्थां निर्मातुमियेष । किञ्चित्कालं पश्चात् -बालकानां विशालसमूहः इन्दिरायाः परितस्तस्या नेतृत्वे एकत्रितोऽभूत । बालकानामेषां प्रथमन्तु उपहासो विहितो वयस्कैः परन्तु यदा एतैः- स्वातन्त्र्यसंग्रामे स्वीयो महत्वपूर्णसहयोगो दत्तस्तदा ते ऽपि साश्चर्यमेषां प्रशंसामकुर्वन् । केचित् ध्वजनिर्माणं अपरे प्रचारपत्रलेखनं (पोस्टर) इतरे च गुप्तसन्देशवाहनमकार्षुः । न च कश्चिदपि बालकानां विषये सन्देहमकरोत् । ये किल भूमिगतनेतारः आसन् - तेषां पार्श्वेऽपि एतैः सन्देशप्रापणमकारि । इत्थं खलु महत्वपूर्णं दलमिदं जातम् । अथास्य किं नाम करणं स्यादिति- इन्दिरा निर्णेतुं न शशाक । एकस्मिन् दिने तया स्वमाता पृष्ठा मातः- "अस्माकं दलं तु जातं परन्तु किं नामधेयमिदं स्यादिति नाहं निर्णेतुं शक्तास्मि । भवत्या अत्र सहयोगो विधेयः ।" मात्रा, कथित कथं न 'बानरसेना" इति नाम करणं क्रियते ।" प्रथमन्तु इन्दिरा क्रुद्धा जाता यत्कथं बानरसेनेति नाम भवितुमर्हति परन्तु यदा कमलानेहरूणा सा प्रतिबोधिता यत् - श्रीरामस्य सेनापि तु बानरसेना आसीत् हनुमान् च तत्र महावीरः- आसीत् । एतत्सर्वं इन्दिरया पठितमासीत् । अतः सा इदं नामकरणमेवाकरोत । एवं इन्दिराया बानरसेना, स्वातन्त्र्यसंग्रामे स्वमहत्वपूर्णसहयोगमदात । जवाहरलालोऽपि वृत्तमिदं कारागारे श्रुत्वा प्रसन्नो जातः ।

६

१९३० खीष्टाब्दस्य नवम्बरमासीये १८ तमे दिने इन्दिराया

त्रयोदशवर्षंग्रन्थिरासीत् । जवाहरलालस्तदानीमपि कारागारे विद्यते स्म । तेन कारातः इन्दिरायै एक उपहारः प्रेषितः । उपहारोऽयं तत्पत्रमासीत्-यन्नेहरोः पत्राणां १९६ पत्रेषु प्रथममासीत् । एतानि पत्राणि नेहरूमहाभागेन इन्दिरायै लिखितान्यासन् । पत्राणामेषां संकलनं 'विश्व-इतिहासस्य रूपरेखा' नाम्ना प्रकाशितमासीत् । पत्रेणानेन लेखकस्य, यस्यै च पत्रमिदं लिखितमभूत्तस्याः- किं व्यक्तित्वमासीत् सहैवात्र एकस्य पितुः सन्देशः पुत्र्यै आदेशात्मकः, आज्ञात्मको वा नास्ति परन्तु सहानुभूतिस्नेहादिभिः पूर्णो वर्तते । अनेनोभयोः स्नेहपूर्णसम्बन्धस्य दूरताया अपि आभासः पत्रादस्माद्भवति या किलोभयोर्मध्ये कारायाः- उच्चतमभित्तिभिरुत्पादिता आसीत् । पत्रमिदं स एवमलिखत्:- पुत्रि ! त्व जानासि यदहं परोपदेष्टा नास्मि ततोऽप्यहं किं कुर्यां ? यद्यपि पत्रेण वार्तालापस्तु न भवति । अधिकाधिकमेकपक्षस्य-वार्तात्र भवितुमर्हति । अतो यदि मम पत्रेऽस्मिन् - किमपि उपदेशवत् - लगेत्त्वां तु कटुकौषधवत्तस्य निगीर्णप्रयासो न विधेयः । केवल त्वद् विचाराय मया सा वार्ता लिखिता स्यादिति चिन्तनीयं यथा त्वं सत्यमेव मया साकं वार्तालापमग्ना भवेः ।

"त्रयोदशवर्षदेशीयां" स्वीयां पुत्रीं स स्मारयति - "अपि स्मरसि यदा त्वया जान आफ आर्कस्य जीवनी पठिता त्वं तादृशी प्रभाविता आसीः यत्तमनुसर्तुं त्वया तदानीं संकल्पितमासीत् ।'

ततश्च तस्या जन्मदिवसमहत्वं स्पष्टयन् श्री नेहरूः लिखितवान्- "१९१७ ख्रीष्टाब्दे यदा त्वमुत्पन्ना असीः ऐतिहासिक वर्षः आसीत । रूस साइबेरिया, देशयोर्महान् - परिवर्तनमस्मिन्नेव वर्षे लेनिनेन कृतम् ।"

पत्रांते लिखितवाक्यानि सर्वथा व्यक्तिपराणि सन्ति तथापि तत्र गूढरहस्यो विद्यते ।

"त्वमसि भाग्यशालिनी यतोहि त्वयाऽसौ संघर्षोऽवलोकितोऽस्ति यो हि देशस्य स्वतन्त्रतायै जायमानोऽस्ति । त्वमेतत्कृतेऽपि धन्यासि यत्तव माता वीरांगना वर्तते यदि त्वं किमपि काठिन्यमनुभवसि तदा तव मातुः अतिरिक्तं कश्चिदपि तव मित्र न भवितुमर्हति अस्तु तावत् मम बाले ! अलम् । त्वं वृद्धिगता देशस्य सेविका वीरांगना च भवे इति - मदीया शुभकामनाः ।'

सस्नेहम् :—

एवं किल पत्राणामेष क्रमश्चिराय चलितः । मानविक्याः शिक्षायाः "पत्रव्यवहारपाठ्यक्रमोऽयमाद्यप्राथमिकरूपेण प्रारब्धोऽभूत् । मार्क् सवादाधारित - क्रान्तिकारि - लिखितः— विश्वइतिहासः, समाजस्य परिवर्तनशीलरूपाणामुत्पादकः - आर्थिकशक्ति नरूपणम्, संसारस्य कोणानुकोणं जायमानानां सांस्कृतिकविकासस्य मूल्यांकनं, मानवप्रगतौ महत्वपूर्णयोगदानदायकानां महापुरुषाणां स्त्रीणाञ्च सजीवचित्रणम्, एतत्सर्वं पत्रव्यवहारे ऽस्मिन् - समाविष्टम् स्वपुत्रीं निर्मुक्तां व्यापक-शिक्षां दातुमिय पुस्तिका जवाहरेण लिखिता अभूत् यया पूर्णोऽपि नूतनमानवसमाजः गम्भीरतया प्रभावितोऽभूत् ।

७

पत्रप्रेषणस्यायं क्रमः सततं प्राचलत् कदाचिच्च द्वित्रीणि पत्राणि सहैवागच्छन् । इन्दिरायाः पिता कारावासे प्रायेण भवति स्म । अतस्तस्याः शिक्षा प्रायेणोपेक्षिता एवातिष्ठत् । पूना - नगरे राष्ट्रवादिना पारसीकदम्पतिना विद्यालय एकः संचालितः । महात्मनः— आदेशेन स तां "प्यूपिल्ज प्रान स्कूल" (शिष्याः विद्यालये) पाठशालायामस्यां तस्या नामाङ्कनमभूत् ।

कूंवर बाई जहांगीर एतन्नामिका वृद्धमहिला स्व पत्या सह पाठ-शालामिमां - संचालयति स्म । पाठशालायामिन्दिराया नाम सप्तमकक्षा-यामंकितो जातः । परन्तु वर्षत्रयकाल एवाऽनया दशमकक्षा प्रभूतांकैरुत्तीर्णा । गणितआंग्लभाषा – इतिहासफ्रैंचभाषा - इत्यादि-विषयेषु इयं प्रवीणा आसीत् । षोड़शाब्देऽनया दशमी कक्षा उत्तीर्णा । अस्याः अध्यापिकाऽवदत् - यदियमतिसक्रिया, ध्यानपूर्वकं कर्मणि रता, शान्तस्वभावा, सर्वैः सह सम्मिल्य निवसन्ती शोभनगुणखनिरिवासीत् । समाचारपत्रमियं पाठशालायामपि नित्यं पपाठ । अस्या निबंधेषु साहित्यसुगन्धरसः, भवति स्म परन्तु राजनैतिकविषया एनां प्रिया आसन् । स्व परिवारस्य समाचारान्वेषणञ्चैषा पत्रेषु प्रतिदिनमकरोत् ।

स्वभावत. लज्जाशीलापि कार्ये सति निःसङ्कोचं कार्यवहनशक्ति-रस्या अद्वितीया आसीत् । 'ऋतुराजः', श्री रवीन्द्रनाथस्य नाटकेऽस्मिन्-

अनया शोभनमभिनीतमासीत् । पाठशालायाः साहित्यसभासचिवाऽपि-इयमभूत् । पाठशालायाः संसदश्चापि प्रधानमन्त्रिणी इयं निर्वाचिता-ऽसीत् क्रीडासु न केवलं बैडमिंटनमेवाक्रीडत् - अपितु कबड्डी सदृशानपि खेलानियमखेलत् यष्टिकाचालन, सवाद्यदण्डक्रीडा (लेजिम) कूर्दनमपि एषा प्रसन्नतया ऽकरोत् । पर्वतारोहणावलोकनयोस्तु रुचिरस्या महती - अभूत् । एकस्मिन्नेव श्वासे सा सिंहगढ़स्योच्चतां लंघते स्म । दुग्धे तस्या रुचिर्नाभूद्वाल्ये । परन्तु श्रीमती बकील तस्या कृषतां दृष्ट्वा दुग्धं सम्यक्तया निर्माय तां प्रददाति स्म । एवञ्च शनैः शनैः सा दुग्धं रुचिपूर्वकमपिवत् । छात्रावस्थायामपि सा सर्वछात्राणां स्नेहेन नेत्री एवाभूत् । छात्रासु सा सर्वदा दिवसे व्यस्ताऽतिष्ठत् । तस्या अध्यापिका प्राकाशयत् - यन्नसा दिवसे क्षणायापि निष्कर्मण्यतयाऽतिष्ठत् । पुस्तका ध्ययनानन्तरं स्वकनिष्ठबालिकानां सेवा स्वप्रकोष्ठमार्जनं, विष्टर-निर्माणम्, उद्यानस्थवृक्षाणां पतितपत्राणां मार्जनमेकत्रीकरणञ्च । केदारिकानिर्माणं पुष्पेभ्यो जलदानमित्यादिकर्मसु समस्तदिवसे व्यस्ताऽतिष्ठत् । परन्तु रात्रौ यदा एकला स्वविष्टरे स्वपिति स्म तु मातुः—पितुः स्मरणमभवत् । यौ कदाचित् कारायां भवतः स्म । माता प्रायेण रुग्णाऽतिष्ठत् यद्यपि सा कम्बलेन मुखमाच्छाद्य स्वपिति स्म येन तस्या रोदनं कश्चित् - न श्रृणुयात् ।' परन्तु सर्वाश्छात्रास्तां रुदन्ती-मश्रृण्वन् इति इन्दिराया अध्यापिका ऽवदत् ।

एकस्मिन् पत्रे श्री नेहरूस्तामलिखत् कारागारतः- दर्शनप्रिये-परमदर्शनेऽतिप्रिये प्रियदर्शिनि ?

अद्य यथैवाहं त्वत्कृते पत्रलेखनायोपविष्टस्तथैव घनघोरगर्जनमिव शब्दमश्रृण्वम् । मया चिन्तितम् यदयं भ्रमएव केवलम् स्यात् । परन्तु क्षणात् शब्दः स्पष्ठोऽभूत् । जयतु परिवर्तनम्, भारतमातुः जयोऽस्तु शब्दा एते आकाशमस्पृशन् । एतत्सर्वमस्माकं समर्थनं क्रियते स्म लोकैः । अह न जाने ते के आसन्, ग्रामीणा नागरिका वा परन्तु अस्माकमुत्सा-होऽनेन वृद्धिं गतः अस्माभिस्तेषामस्या श्रद्धाया मूकमुत्तरमपि दत्तम् स्वीया शुभकामनाः अपि ।"

पत्रं पठित्वा इन्दिरयाऽनुभूतं यथा तस्याः पिता तया साकं तत्रैव स्थित्वा वार्ता कुर्वाणः अतिष्ठत् । स्वस्वतन्त्रतासंघर्षस्य, क्रान्तेश्च

पूर्णदर्शनविषयेऽपि पत्रेषु लिखितं यस्य कृतेऽसौ, तत्पत्नी, समस्तपरिवारश्च कारावासे निक्षिप्तः आसीत्।

एवं किल इन्दिराया अभूतपूर्वं शिक्षा जाता।

८

बालिकासु एका उत्सुकता आसीत्। तासां वार्ताभिः–छात्रावासः गुञ्जायमानः आसीत्।

"___ जानासि काद्य आगच्छति? बारत्रयमपि चेत्कथयसि तर्हि मन्ये।

"___ अहं जाने सा आगच्छति___"

"___नाहं विश्वसिमि। किं सा अस्माभिः साकं निवसिष्यति?

"___ नैव नेदं कदापि सम्भाव्यते। जानासि कीदृशे परिवारे सा वृद्धिं गता?"

"श्रूयते यत्तस्याः सेवायामनेके सेवकास्तिष्ठन्ति। तृणमपि नोत्थापयितुं सा सज्जा।"

"___चेदागता तु अस्मान् कथयिष्यति" यन्मदीयं चायपेयं भवतीभिरेव प्रातः मम विष्टरोपरि आनेयम्___।"

श्रूयते यत्तस्याः पितामहस्य पितुश्च वस्त्राणि - अपि पेरिसात् - प्रक्षाल्य समायान्ति आंग्लविद्यालयेषु पठिता वर्तते _ततश्च आंग्लमहिलानां शोभनवस्त्राण्यपि समानीतानि स्युस्तया? ___सम्भवतः फ्रांसदेशीयशाटिका एव धार्यन्ते तया।

सर्वा क्षणाय स्तब्धा जाता यदा ताभिरेका षोडशी बाला वृक्षेभ्योऽभ्यन्तरं छात्रावासं प्रति समायान्ती सा दृष्टा।

दुर्बला, तन्वी, दीर्घाकारः पीतश्च मुखमण्डलः। स्थूल-तूलशाटिकां परिधाय नग्नचरणैरायाति स्म। एकस्मिन् हस्ते पुराणा वस्त्रमञ्जूषा द्वितीये च लघुविष्टरः। यदा सा छात्राबासपार्श्वे प्राप्ता तदा बालिकाभिरनुभूतं यदीयं तु अतिसरला बाला अस्ति। एका बालिका तस्या उपहासं कुर्वन्ती रवीन्द्रस्य गीतमिममुच्चचार तोमार बाश कोथा जाय, पथिक, हे पथिक! तव गृहं क्व वर्तते?

"केयम् —...? सम्भवतः सा एवैषा ।" परन्तु सा कथं भवितुमर्हति ?

सत्यमिदमासीत् यत् सा इन्दिरैवासीत्। शान्तिनिकेतनवासकाले तस्या पित्रा श्री रवीन्द्रनाथः प्रार्थित आसीद्यत् - इन्दिरा अन्यसाधारणकन्या इव मन्तव्या । शान्तिनिकेतनछात्रावासे कक्षमार्जनं, भोजनपाचनं, भोजनशालामार्जनं, जलेन पाकशालाप्रक्षालनं, भोजनस्वच्छीकरणमिति सर्वमपि कार्यं साऽकरोत् । भोजनशालायां यस्मिन् दिने प्रियदर्शिन्या वारो भवति स्म तद्दिने सा भोजनं निर्माय सर्वाभ्यो बालिकाभ्यश्च भोजनं वितीर्य अन्ते स्वयं भुङ्क्ते स्म। पाकशालां दर्पणनिभां प्रक्षाल्य यदा शयनकक्षमगमत्तदा सर्वा बालाः- गाढनिद्रायां सुप्ता भवन्ति स्म । तत्र सुप्तायां अपि तस्या मनस्तु पितुः पार्श्वे तस्य कारागारकक्षेऽथवा मातुः यक्ष्मा - चिकित्सालयकक्षे विचरणमकरोत् । इदानीं पत्रस्यासौ क्रमोऽपि प्रायेणावसित एवासीत् यो हि चिरात्प्रचलित आसीत्। सा स्वपितुरन्तिमपत्र बारं बारं पठति स्म अनुभवति स्म च यत्तस्या जनकेन पत्रेऽस्मिन् स्वीयाः सम्पूर्णविचारा एकत्री कृताः । पत्रमेवेदं तादृशमासीत् । अस्मिन् सम्पूर्णसारस्तेन संस्थापित आसीत् ।

"..... मया बहूनि पत्राणि तुभ्यं लिखितानि एतावत्कर्गजमसिप्रयोगस्तु मया कृतोऽस्ति परन्तु किमपि तादृशः सन्देशस्त्वया एभ्यः प्राप्तोऽस्ति यस्मिन् - त्वदीया रुचिः स्यात । त्वन्तु मम सन्तोषाय आमित्येव कथयिष्यसि। यतोहि त्वं जानासि यद्यदि किमप्यन्यदुत्तरितं त्वया तु तत्र पिता दुःखी भविष्यति। त्वं मां प्रति तादृशीं प्रीतिं धारयसि यया मह्यं दुःखदानस्य साहसं न करोषि त्वया पत्रेभ्य एभ्यः किमपि प्राप्तं स्यान्नवा ? परन्तु गतवर्षेषु यन्मया लिखितं तेनाहं हृष्टोऽस्मि अधिकारमिमञ्च त्वमवश्यं मह्यं दास्यसि ।

इन्दिरा प्रायेणाचिन्तयत् - "अहं कियद्भाग्यवती" अस्मि या एवंविधसाधारणपितुः पुत्रीत्वे लब्धवती । परन्तु जवाहरोऽसाधारण एव नासीत तस्य हृदयेऽपरेभ्योऽगाधस्नेहसागरो 'नरन्तरं प्रवहति स्म । स्वतन्त्रतायां तस्यागाधविश्वासः — आसीत । स्वपुत्र्या व्यक्तिगतजीवनस्वातन्त्र्यमपि स कदापि न बाधितवान् स्वीयान्तिमपत्रस्यान्ते रवीन्द्रनाथस्य गीताञ्जलितोऽसौ पद्यमिममलिखत :—

मनो भीतिं विना यत्र यत्रोच्चो मस्तकः सदा
सर्वेषां मानवानां वै गर्वेण च महीयसा ।
यत्र क्षुद्रविचाराणां भित्तिभिर्न च वण्टितः
विश्वोऽयं खण्डशो भूयात् - स्वच्छदर्पणसन्निभः ।।
कर्मणाञ्च विचाराणां व्यासो यत्र सदा भवेत् ।
मनो विशालक्षेत्रेषु विचरेत् - स्वेच्छया किल ।
हे प्रभो ! मामकीनेयं प्रार्थना चरणेषु ते ।
स्वतन्त्रतायाः स्वर्गे वै चक्षुरुन्मीलयेदयम् ।
मम देशो महीयांश्च महत्तामाप्नुयात्ततः ।

——

इन्दिरा दृष्ट्वेदं परमाश्चर्यान्विता जाता । श्री रवीन्द्रनाथस्य श्री नेहरोश्च विचारेषु कियत्साम्यमस्ति । एकः सन्तः अपरः क्रान्तिकारिः एको दार्शनिकोऽपरश्च कर्मयोगी । साऽचिन्तयत् क्वचिदेवं तु नास्ति यत्तस्याः क्रान्तिकारिपितुर्मनसि क्वचित् दार्शनिकताया अंशोऽपि वर्तते तथा शान्तिनिकेतनस्य सन्तमनसि क्वचित् क्रान्तिकारिकर्मयोगिः प्रच्छन्नः स्यात् ।

बहुभिर्लेखकैरिदं स्वीकृतमस्ति यदिन्दिरा यद्यपि संकोचशीला आसीत्तथापि सा स्व सहाध्यायिछात्राभिः हासपरिहास तथाचोत्पातेऽपि पूर्णसहयोगमदात् । तस्यै अन्यछात्रापेक्षया महत्त्वं न दत्तं स्यादिति कृत्वैव सा रवीन्द्रनाथमपि कदाचिदेवामिलत् । परन्तु श्री रवीन्द्रस्तस्या स्वाध्यायविषये सर्वदा ध्यानमदात् एकदिवसे सा कतिपयछात्राभिः सह गुरुदेवस्य गृहाग्रेण गच्छति स्म । तदानीं सा गुरुदेवेन आहूता कोमलस्वरेण च पृष्टा पुत्रि: ? किं मम सकाशात् बिभेषि यदत्र नायासि ? इन्दिरया तत्क्षणमुत्तरितं 'नहि तात क्वचित् भवतां कार्ये प्रत्यूहो न भवेत्तस्मादेव न आयामि ।" तद्दिनात् प्रतिवासरम् सा चित्रशालायां गुरुदेवस्य गच्छति स्म तत्र च कोणे उपविश्य गुरुदेवं चित्रयन्तमवलोकयति स्म ।

कलासु तस्या गहना रुचिरासीत् तस्या नाम प्रथमन्तु नृत्यकक्षायां न लिख्यते स्म यतोहि सा परम संकोचशीला आसीत् । परन्तु

तस्या रुचिमालोक्य यदा नामोल्लेखो जातस्तु मणिपुरी नृत्यशैल्यां सा तादृशमभ्यासमाप्तवती यत्तस्या नामोल्लेखः- विशिष्टसमारोहे प्रदर्शनाय जातः। मणिपुरीनृत्यस्य भूषा तस्यै निर्मिताऽभूत्। सा तां धारयित्वा काऽप्यपूर्वाऽप्सरेव लग्ना। नृत्यस्य सज्जा क्रियते स्म। तदैव गुरुदेवेनाहूता प्रियदर्शिनी एकस्तन्त्रीसन्देशश्च दत्तः तस्या हस्ते। "अस्या माताऽधिकरुग्णा वर्तते शीघ्रमेषाऽत्र प्रेषणीया" इन्दिराया नृत्यप्रदर्शनस्वप्नस्तत्रैव नष्टः सा च वस्त्राण्यवतार्य प्रयागं प्रति स्वमातृसेवायामायाता। शान्तिनिकेतनादागमनात् प्राक् श्री गुरुदेवेन कथितं यत्त्वया सह कश्चित्प्राध्यापकस्तत्र प्रयागं यावत् गमिष्यति। परन्तु इन्दिरया प्रोक्तम्–"नैव गुरुदेव? मम पित्राऽहमेकला एव यात्रा-करणार्थं कथिताऽस्म। न चाहं बिभेमि। एकलापि सुखेनैव गमिष्यामि।" इद निश्चितमासीत्-यदिन्दिरा स्वमातृसेवालग्ना पुनः शान्तिनिकेतनमा-गन्तुं न शक्ष्यति तस्याः पिता, पितामहः सर्वेऽपि कारायां सन्ति। कमलां सेवितुं सेवावशिष्टा आसीत् तस्या गमनात् शान्तिनिकेतने एकं घोरमौदासीन्यं किञ्चित्कालाय प्रसृतम्।

जर्मनदेशस्य (ब्लैकफोरेस्टे) कृष्णवने, वेंडेनवाइलर नामक नगरे एकस्मिन्-चिकित्सालये कमलायाः चिकित्सा भवति स्म। तस्याः शय्याया शिरोभागे समुपविष्टः श्री नेहरू स्वकीयात्मकथायामलिखत्:— "अस्यामुपत्यकाया शैत्यधूममेघा ऊर्ध्वमायान्ति। एभिः सुस्पष्टमपि दृश्यमाना फ्रांसदेशसीमाऽधुना पूर्णरूपेणाच्छादिता, समस्ताऽपि दृश्याव-लिर्निलीना मेघेषु। अहमत्र चिन्तयन् तिष्ठामि यत्तेषां पारे किमस्ति।

भविष्यस्य तद्घोरान्धकारपारे एका दुःखपूर्णा गाथा प्रच्छन्ना आसीत्। जवाहरलालस्य कृतेऽपि विश्वस्य कृतेऽपि च।

१९३५ खीष्टाब्दस्य मईमासे इन्दिरापि स्वमात्रा सह जर्मनस्य तस्मिन्-चिकित्सालये गताऽभूत। परन्तु यक्ष्माऽन्तिमसीमायामासीत्। इन्दिरा निःसहायोपविष्टा स्वमातरं कणशः क्षीयमाणामलूलुकत्। सुदूरे तत्र विदेशे कोऽपि तस्याः सहायको नासीत्-न च धैर्यदाता एव। केवलं फिरोजगांधी-यस्तस्या प्रयागीयबाल्य-सार्थी–आसीत्-तदानीं

इङ्गलैंडे (स्कूल आफ एकोनोमिक्स) अर्थशास्त्रविद्यालये च पठतिस्म—स्वकीयमध्ययनमपि परित्यज्य रेलगन्त्या दीर्घयात्रां पूरयित्वा कमलामालोकयितुं तस्याः सम्भवसेवां च कर्तुं बेडेन वाइलर नगरमागच्छति स्म कमला तमेकं शोभनबालकं मनुते स्म। फिरोजोऽपि नेहरूपरिवारं तथैव प्रेम्णाऽवलोकयति स्म यथा स्वातन्त्र्यलक्ष्यम्। जवाहरलालस्तु देहरादूने कारावासे तदानीमासीत् केवलं फिरोजस्तत्र कमलायाः सेवाकरणं राष्ट्रसेवावत् - एव स्वीचकार सहैव इन्दिराया सेवां कृत्वापि - असौ - महतीं प्रसन्नतामनुभवति स्म। अस्तु। चिकित्सकैः—महीयान् प्रयासो विहित परन्तु कमलाया अन्तकालस्तु दूरे नासीत्। आंग्लैर्भयविह्वलैः जवाहरलालः सूचितो 'यत्—तस्य कारावासदण्डो न्यूनीकृतो वर्तते। असौ स्वरुग्णां पत्नीं द्रष्टुं जर्मनदेशं गन्तुं शक्नोति।" जवाहर एकतस्तु स्वपत्न्याः रोगचिन्तया चिन्तित आसीत् अन्यतश्च इन्दिराया उपरि सर्वोऽपि रुग्णस्य भारोऽस्ति - सा कथं सर्वमिदं करोतीति मानसिक - दुःखमासीत्। जवाहरो वायुयानेन जर्मनदेशं प्राप्तः कारागारतो मुक्तः सन्। यथैव कमलया ऽसाववलोकितस्तस्याः लोचने केनापि दिव्यप्रकाशेन प्रकाशितेऽभवताम्। इन्दिराया हर्षस्य तु न कापि सीमा आसीत् सा स्वपितरं दृढमाश्लिष्य अमितहर्षमाप। कथं न स्यादथवा समस्तपरिवारोऽद्य विकीर्णोऽपि एकस्थाने तत्रापि विदेशे सम्मिलितोऽभूत पृष्ठतश्च फिरोजोऽपि स्थित आसीत्।

फर्वरी मासस्य २८ दिवसे कमला ऽसारमिदं संसारं परित्यक्तवती इन्दिरा तत्रैव स्थिताऽभूत तस्या उपरि द्वितीयोऽयमाघात आसीत। प्रथमं पितामहस्य देहावसानमपि सा एवमेव ददर्श। अद्य स्वमातुरन्तिमदर्शनमकरोत्। दीर्घस्वरेण रुदन्ती सा स्व पितरमालिलिङ्ग। तस्या एकमात्रसहायकोऽयमेव तु - अवशिष्टः आसीत।

१९३६ ३७ खीष्टाब्दयोर्मध्ये समस्तयोरपखण्डे वैचारिकसैद्धान्तिकक्रान्तिरुत्पन्नाऽभूत्। ब्रिटेनोऽपि एतयोर्मध्ये पाशितः आसीत्। भारतीयछात्राः ये किल तदानीं लन्दनकैम्ब्रिजआक्सफोर्डेषु पठन्ति स्म तेषामुपरि अपि स्वातन्त्र्यस्य विचाराणामप्रतिमप्रभावो न्यपतत्।

लन्दनस्य फेयरफैक्स मार्गोपरि एकश्छात्रावासः आसीत् । अस्य सर्वोपरितले द्वे भारतीयछात्रेऽवसताम् । शान्ता गांधी इन्दिरानेहरू च । शान्ता लंदनस्य एकस्मिन् - महाविद्यालये पठति स्म इन्दिरा च आक्सफोर्डे प्रवेशाय सज्जां कुरुते स्म । पूनायामपि उभे-एकस्मिन् - एव विद्यालयेऽभवताम् । इदानीं यदा उभे लन्दने मिलिते तु ताभ्यां सहैव कक्ष एकः भाटकोपरि निवासाय गृहीतः ।

इन्दिराया कृतेऽत्र आनन्दभवनस्यानन्दजनकवातावरणं नासीत् न च शान्तिनिकेतनस्यादरस्नेहमया स्थितिः । मोतीलालस्य सर्वमपि धनं स्वातन्त्र्यान्दोलने समाप्तमासीत् आनन्दभवनस्य सज्जासाधनान्यपि- आंग्लैः- गृहीतानि - आसन् । केवलं विशालभवनमेवावशिष्टमासीत् । अतः धनस्याप्यभाव एव आसीत् । जवाहरलालस्य पुस्तकविक्रय- सम्बन्धिनं तस्याशं प्रकाशकाः जवाहराय यच्छन्ति स्म तस्मादेव इन्दिराया अध्ययनाय व्ययरूपेण प्राप्यते स्म सीमितं धनम् । अतः स्वयमेव तत्र भोजनादिकं सर्वं साधनीयं भवति स्म । तत्रापि उभे (इण्डियनलीग) भारतीयसंघस्य तथा च स्पेनमहायतासमित्याः सदस्येऽभवताम् । शान्ता नृत्यं - कृत्वा इन्दिरा च भाषणानि दत्वा धनमेकत्रितमकुरुताम् स्पेनसहायतासमित्यै । एकदा स्वहस्तस्थस्वर्ण- कंकणान्यपि तत्र दाने प्रदत्तानि । डोलोरे इबारूनी नामिका या स्पेन- स्य स्वतन्त्रतादलनेत्री - आसीदेकदा लन्दनमायाता । उभे तस्या केवलं क्षणिकदर्शनाय कतिपयहोरा यावत् - वर्षासु स्थितेऽभवताम् ।

एकस्मिन् दिने ते चित्रपटं दृष्टुं जिगमिषतः स्म । यतोहि विकास- शीलकलिके एवास्तामुभे अतः कदाचित् - चित्रपटदर्शनादिकृते इच्छाजागरणं स्वाभाविकमासीत् । तद्दिने इन्दिरया शान्ता प्रोक्ता एकस्य युवकस्य परिचयं ददत्याः अयमस्ति फिरोजगांधी । अयमपि आवाभ्यां सह चित्रपट दृष्टुं गमिष्यति ।" इन्दिराया संगीत - नृत्य- नाट्यादिकार्यक्रमदर्शने तथा च चित्रपटदर्शने महती रुचिरासीत् । परन्तु चित्रालये सर्वेभ्यो निम्नमूल्यस्य प्रवेशपत्रं क्रेतुं प्रभवतः स्म । यदा तत्रत्य भोजनेनारुचिर्जागृता भवतिस्म तदा ताम्बूलभक्षणस्येच्छा जायते स्म । ताम्बूलं रजतपत्रेणावेष्टितं भवति स्म परन्तु तदानीमपि रूप्यकचतुष्टयेन क्रेतुं शक्यते स्म । धनाभावात् - कदाचिदेव तद्भक्ष-

णस्योत्साहो भवतिस्म । चिरं यावच्च चर्वितचर्वणं विधीयते स्म तस्य । शान्तागान्धी - अद्यापि सम्यक् स्मरतिस्म इन्दिराया चक्षुषोः- युवाप्रेम्णः- प्रकाशश्च - यदा तया फिरोजगान्धिना सह तस्याः परिचयः कारितः- आसीत् ।

अत्र च सहस्रशः कोशदूरे श्री नेहरुः स्वीयराजनैतिककर्मणि सर्वदा संलग्नोऽतिष्ठत् । अनेनासौ स्वपत्न्याः- वियोगविस्मरणप्रयासं कुरुते स्म ; कमलाया अवसानं पश्चात्तस्य वैयक्तिकजीवनं प्रायेणाबसितमेवासीत् । अधुना तस्य जीवनं देशाय देशस्य च लक्ष्याय पूर्णसमर्पितमासीत् । तेन लिखितमपि "मम सहधर्मिण्या अवसानेन मम अस्तित्वस्य एकोऽध्यायः समाप्तोऽस्ति । बहुतरमात्रायां च मज्जीवनंतस्तत्प्रणष्टमस्ति यन्ममास्तित्वस्याभिन्नाङ्गमासीत् कथमपि मम मनस्तदिदं स्वीकर्तुं सज्ज एव न भवति स्म यत्सा इदानीं नास्ति । मया बहु काठिन्यमवाप्तमेतत्स्वीकरणे ।"

कांग्रेससंस्थाया :- निर्वाचनानि जायमानानि आसन् । श्रीनेहरुणा देशस्य कोणानुकोणं भ्रमणं कृतम् पूर्वं न केनापि तादृशं भ्रमणमकारि । कांग्रेससंस्था बहुषु राज्येषु जिता समाचारोऽयं यदा इन्दिरया श्रुतस्तु सा गर्वमकरोत् परन्तु मनसि - इदमपि - अचिन्तयद्यत् -"पित्रा न किमपि पत्रं मह्यं प्रेषितम् । किं स मां विस्मृतवानेव ." प्रचारकर्मणि व्याप्तः स पत्रव्यवहाराय समयमेव नाप्तवान् । परन्तु स सर्वदा इन्दिरां स्मरति स्म । उत्तरपश्चिमभारतस्यादिवासि (कबायली) क्षेत्रे स गतवान् । तत्क्षेत्रविषये कथनमासीद्यत् प्रत्येकशिलायाः पृष्ठे तत्र शस्त्रधारी - आदिवासी प्रच्छन्नस्तिष्ठति यथैव च कश्चित्तत्र यदि गच्छति तु नासौ जीवितः प्रत्यावर्तते । परन्तु जवाहरलालस्तानेव भाषणमकरोत् । एवमनुश्रूयते यत् - केचन अत्रत्या पाठीनाः स्त्रीणामपहरणं कुर्वन्ति निरपराधान् - च लुण्ठन्ति मारयन्ति च" परन्तु नाहं विश्वसिमि । पाठीनास्तु :—वीराः सन्ति भवद्भिरिदं दृष्टव्यं यत् - केषाञ्चन दुष्टानां कारणेन समग्रेयं वीरजातिः- अपयशमर्जयति । ममापि वर्तते एकमात्रपुत्री । सा ऽद्य मया साकं नास्ति । यदि सा ऽ भविष्यत्तु सर्वस्मिन् - क्षेत्रे एकला एव भ्रमणमकरिष्यत् - भवत्सु । साऽपि निर्भीका

वर्तते। पुनश्च सा भवतामतिथिरूपाऽभविष्यत् तस्याश्च रक्षाया उत्तरदायित्वं भवत्सु अभविष्यत्। सा सुदूरे इङ्गलैण्डदेशेऽस्ति साम्प्रतम्। यदा सा आगमिष्यति तदाहं तामेकलामत्र प्रेषयिष्यामि। सा च स्वयं सर्वत्र भ्रमणं करिष्यत्यत्र। पाठीनजातिस्तु स्वमित्राणां प्रति पूर्णविश्वासपात्रभूताऽस्ति।" ततश्च तेन कथितं स्वतन्त्रताविषये। स्वातन्त्र्यं दक्षिणादुत्तरदिशं यावत् प्राप्स्यते। सर्वोऽपि देशः स्वतन्त्रो भविष्यति तत्र च सर्वेषां समानभागित्वं भविष्यति। एतत्सर्वं श्रुत्वा भावाभिभूताः पाठीनाः श्री नेहरूमपृच्छन्–"श्रीमन् भवता कदा स्वीया पुत्री अत्र प्रेषयिष्यते? वयं तस्याः सर्वविधसुरक्षाया उत्तरदायित्वं स्वीकुर्मः। न तस्यै किमपि कष्टमत्र भविष्यति। यतोहि मित्रस्य पुत्री–अस्माकं गृहे अतिथि भूत्वा आगमिष्यति।

१०

जवाहरलालस्य विदेशयात्रायाः काल आसीत्। असौ स्पेनदेशं तथा च चैकोस्लोवाकिया देशं गन्ताऽऽसीत्। परमितोऽपि प्रथमं स स्वपुत्रीं मिलितुमियेष या तदानीं आक्सफोर्डे पठति स्म। तदानीन्तनस्तस्या आंग्ल्यप्राध्यापकस्तस्या विषयेऽकथयत् "इन्दिराऽति लज्जाशीला, विनम्रा, शान्तस्वभावा बालिका आसीत्।" अपरान् पृष्ठे कृत्वा तथा कदापि स्वयमग्रे गमनस्य प्रयासो नैव विहितः। सा भारतीयसंघे गच्छति स्म परन्तु तत्र स्वल्पतया एव भागमग्रहीत् संघस्य वादविवाद विषयस्तत्रैकदा- 'कांग्रेसेऽधिका क्रान्तिकारिताया आवश्यकता विद्यते" इति आसीत्। वक्तृषु प्रमुखास्तिस्रः वामपन्थिनः भारतीयाः आसन् शैलवणकरः निखिल चक्रवर्ती, युसुफ मेहर अलि च। एते तदानीं इङ्गलेण्डे आसन्। एभिः कांग्रेससंस्थायाः जवाहरलालस्य च कटुआलोचना कृता। इन्दिरया वाद-विवादे न कोऽपि पक्षो गृहीतः। सा स्वपितुः पक्षे किमपि कथने संकोच कृतवती। फासिस्टविरोधिआन्दोलने सा शान्तिमयरूपेण भागं गृहीतवती। लन्दन नगरे सम्वेदनशीलयहूदी-जर्मनकविम् अर्नस्त टेलरं सा अपश्यत्। तेन साकं वार्तालापस्य च गहनप्रभावस्तस्या उपरि पतितः। असौ स्वमातृभूमि जर्मनात् निष्कासितोऽभवत्। इन्दिरया स्वयं लिखितम्–"तस्य नेत्रयोरथाहवेदना आसीत्। बहुवर्षेषु यानि यानि कष्टानि तेन

सोढानि - आसन् तानि सर्वाणि तस्य लोचनयोरेकत्रीभूतानि आसन् ।" हिटलरस्यातंकेन पीडितायाः समस्तमानवताया असौ प्रतीकः आसीत् । टोलरदम्पती भारतस्यैनां साधारणबालिकां दृष्ट्वाऽति प्रसन्नः आसीत् । श्रीमती क्रिस्टन टोलरः श्री जवाहरलालमलिखत्—"इन्दिरां दृष्ट्वा- ऽतीव हर्षः जातः । सा परमसुन्दरी शुद्धमनस्का चास्ति ।" एतस्या घटनाया एकवर्षानन्तरमेव उभौ स्वदेशममेरिकां गतौ । पश्चात् शीघ्र- मेवासौ यमसदनमाससाद । इन्दिरा तस्य मृत्युसमाचारं श्रुत्वा शोकार्ता जाता । मृत्युरपि तस्य आत्महत्याकारणात् अभवत् । एषु दिवसेषु सा सुडेटेन लैण्डेऽवकाशेषु - आसीत् । हिटलरोऽत्र स्वराज्यं विस्तारयामास । तया नाजिभिः कृता अत्याचाराः पाशविकप्रायाः स्वयं दृष्टा आसन् ।

जूनमास आसीत् । सा स्वपितुरागमनं परमौत्सुक्येनावलोकयत् । इन्दिरा तस्य तत्कालीनमनोदशां सम्यक् - जानातिस्म । नेहरोः सम्वेदनशीलमनस्तदानीं त्रस्तमासीत् ।

युवरूपं गच्छन् - नेहरू मार्गे स्वेजनद्यास्तटे वफ्तदलस्य नेतारं नहास पाशानामानममिलत् । अयं अरबराष्ट्रेषु प्रथम नेता आसीद्यं जवाहरोऽमिलत् । सोऽतीव प्रभावितोऽभूदनेन यदरबदेशीयानामस्मा- कञ्च विचाराः समानाः सन्ति । फ्रांसस्य मार्सेई नामकजलपोतपत्तने ऽवतीर्णः । इन्दिरा परमोत्सुका आसीत्तस्याः पितुः- दर्शनाय । परन्त्वसौ वायुयानेन अन्ताराष्ट्रियदलस्य वीराणामभिनन्दनं कर्तुं बार्सीलोना स्थानं जगाम । अत्र वीराः सेनापति फ्रांको नामकस्य सेनाभिः सह स्पेनगणराज्यस्य रक्षाकरणे संलग्ना आसन् । अस्मात् - स्थानात - परावृत्त एव नेहरूः स्वपुत्रीं ददर्श । वर्षद्वयानन्तरमुभ- योर्मिलनमभूत् । परन्तु पारिवारिकजनानां विषये तथाचात्मविषये वार्तालापकरणस्य समयोऽवकाशो वा क्व आसीत् । जवाहरः स्वपुत्रीं अन्ताराष्ट्रियसेनादलविषये परिचयमदात् । इयं विचित्रा सेना आसीत् । अस्यां कश्चिदपि प्रशिक्षितसैनिकः-नासीत् परन्तु - अस्यां कवयः- लेखकाः सर्वविधवुद्धिजीविनः आसन् । एते आदर्शसुखपूर्णसंसारस्य स्वप्नदर्शनमकार्षुः । अस्य स्वप्नस्य रक्षायै संसारस्य विभिन्नकोणेभ्यः समागताः— आसन् । पञ्चमासानां काले नेहरूस्तत्र भ्रमणमेव चकार । लन्दन पेरिस जेनेवादिस्थानेषु सोऽधिकं

कालं यावत्स्थितः । आगमनकाले इन्दिरामपि भारतमानीतवान्—अवकाशस्य कानिचन दिनानि व्यत्यापयितुम् ।

भारतागमनकाले जवाहरलालः पुनरपि मिस्रदेशे स्थितः । तत्र नहास पाशा नेत्रा सह पुनर्मिलनं जातम् । तत्रत्यैः जवाहरलालस्य तत्पुत्र्याश्च तत्र बहु स्वागतं कृतम् । भारतअरबराष्ट्रयोः समानलक्ष्यकारणादपि इद स्वाभाविकमासीत् । परन्तु भारते वार्ता इयं एवं प्रसृता यदिन्दिरायाः विवाहः नहास पाशानेतुः- पुत्रेण सह भविता । इदमप्यत्रोल्लेखनीयमस्ति यत् - नहासपाशा तु पुत्रहीन आसीत् ।

इन्दिरा भारते मासत्रयपर्यन्तं स्थिता जवाहरलालस्तु भारतस्वतन्त्रतान्दोलनकर्मणि व्यस्तोऽभूत् यदा कदा स्वकीयरुग्णमातृदर्शनाय जवाहरः आनन्दभवनमागच्छति स्म । जवाहरलालस्य माता तुष्टा आसीत् यदिन्दिरा तस्याः पार्श्वेऽस्ति । यतोहि गणनीयदिवसा एवावशिष्टा आसन् तस्याः ।

एकस्मिन् - दिने इन्दिरा स्वक्रीडनकानामवलोकनं कुर्वन्ती सस्मार । सा कांग्रेसकार्यालयं गता तत्र च नेतृप्रमुखानाह—"इदानीमहमेकविंशतिवर्षदेशीया जातास्मि । सा कांग्रेससंस्थाया सदस्या निर्मिताऽभूत् ।

१९३९ खीष्टाब्दस्य अप्रैलमासे इन्दिरा प्रियदर्शिनी पुनः आक्सफोर्ड विश्वविद्यालयं गता किञ्चित्कालानन्तरमेव द्वितीयविश्वयुद्धारम्भो जातः । गृहात् - पितामह्या अवसानस्यापि पत्रसूचना समायाता । अतीवकठिनदिनान्यासन् । भोज्यस्याभावः, पौष्टिकभोजनराहित्यं, शैत्यात्संरक्षणस्य न किमपि साधनमासीत् । मानसिकचिन्ता, प्रक्षेपास्त्राणां शब्दाः, सर्वमिदं चिन्ताकुलं कुर्वन्ति स्म । परिणामतः सा रुग्णा जाता । जवाहरलालस्याज्ञानुसारं सा स्विटजरलैण्डस्य चिकित्सालये प्रेषिताऽभूत् । स्विट्जरलैण्डस्य आल्प्स पर्वतीयस्वच्छपवनेन सा स्वस्था जाता । परन्तु परितः युद्धकारिभिः देशोऽसौ समाकीर्ण आसीत् । तस्मात्स्थानात् वायुयानेनागमनं सर्वथा संकटपूर्णमभूत् । तथापीन्दिरा भारतागमननिर्णयमकरोत् । सम्बन्धिभिः चिन्ता प्रकटिता यत्सा वायुयानेन कथमागन्तुं शक्ष्यति ? जवाहरलालोऽवादीत्—

"संकटानां साम्मुख्यकरणाय तया सर्वदा सन्नद्धया भाव्यम् । भारतागमननिर्णयस्तस्या प्रशंसार्हः सोऽब्रवीत् । परन्तु वायुयानस्थाने जलपोतेनैव इन्दिराया प्रत्यागमनव्यवस्था मित्रवरस्य फिरोजस्य प्रयासैः जाता । फिरोज़ः, इन्द्रजीतगुप्तः इन्दिरा च एषा त्रयी एकयाने समुपविष्टा आसीत् ।" येषां विचारेषु पूर्व-पश्चिमयोर्भेद आसीत् ते एव एकस्थाने एकयानेन समागच्छन्ति स्म । दक्षिण - अफ्रिकायामेते कतिपयदिवसपर्यन्तं स्थिताः । तत्रत्यभारतीयैरस्याः सम्माने सभैका तत्रायोजिता सा तस्यां भाषणमपि करिष्यतीत्यासीत्तेषामाग्रहः परन्तु बारं बारं अनुरुद्धा अपि सा ऽवोचन्नाहं भाषणं कर्तुं समर्थास्मि ।' दिवसे सा फिरोजभूपेशाभ्यां सह नगरावलोकनाय गता । तत्र सा तत्रत्यकृष्णवर्णजनैः साकमथ च भारतीयैः - सहापि आंग्लानां दुर्व्यवहारं दृष्टवती । तेन साऽतीव पीड़िता पश्चात्सम्मानगोष्ठ्यां गता । तत्रत्यायोजकः कथयितु प्रवृत्त :- "यत्कुमारी नेहरू भाषणं न—" इत्यर्धोक्ते एव तस्य वाक्ये सा वेगेनोत्थिता भाषणं च दीर्घतरमदात् । तस्याः मनसि महीयान् क्रोधः— आसीत् । स च तस्या भाषणे वहिरायातः । तयां गौरांगानामस्य व्यवहारस्य तुलना हिटलरस्य यहूदिजातीयैः सह कृतव्यवहारेण विहिता । तयोक्तम्—"अफ्रीका अफ्रीकीयानामस्ति । एकस्मिन् दिनेऽवश्यमेव अफ्रीकीयाः स्वकीयस्यास्य द्वीपस्य स्वामिनो भविष्यन्ति गौराङ्गैरित एकस्मिन् दिनेऽवश्यमेव गतव्यं भविष्यति । तया भारतीया अपि - ये तत्र व्यापारिणः, आपणिकाः, प्रशासकीयसेवकाश्चासन् ते सर्वेऽपि गौराङ्गानां चाटुकारितायै प्रताडिताः । इन्दिरया स्वयमलेखि—"एतदर्थं तत्रत्य भारतीया ये प्रथमं मम स्वागताय समुत्सुका आसन् त एव मां भाषणानन्तरं सर्वथा तत्यजुः । यद्यपि वयं तत्र चिराय स्थिता आस्मः परन्तु तदनन्तरं न केनापि वयं निमन्त्रिता वहिष्कारश्चास्माकं कृतः ।"

द्वाविंशति वर्षीयाया युवत्या डर्वने प्रदत्तमिदं भाषणं तस्या राजनैतिकप्रखरतां प्रकटयति । सम्भवतस्तस्मिन् दिने तया स्वव्यक्तित्व ज्ञातम् । एतदनन्तरं यदापि आवश्यकताऽभवत् तया स्वविचाराः प्रकटिताः ।

१९४१ ख्रीष्टाब्दे नेहरूपरिवारस्य प्रतिष्ठा विश्वविख्याता जाता तदानीं कश्चिदपि युवकः रूपगुणराशिभूतया प्रियदर्शिन्या सह विवाहाय समुत्सुको न भवेत् ? परन्तु जवाहरलालस्योदारतैवेयमासीत्तेन इन्दिरा विवाहविषयेऽपि स्वतन्त्रा कृता आसीत् । केचन कथयन्ति यन्नेहरूः— विवाहस्यास्य विरोधमकरोत् । परन्तु तथ्यमिदमस्ति यदुभयोर्विचारेषु महदन्तरमासीत् स्वभावयोश्चापि । एतत्कृत एव नेहरू प्रथमं स्वीकृतिप्रदाने संकोचमकरोत् । परन्तु पश्चात् - तेन समारोहपूर्वकं विवाहेऽस्मिन् - स्वीयः आशीर्वादो दत्तो विवाहश्च कृतः । इदमपि तथ्यमस्ति यदिन्दिराया अन्ये पारिवारिकाः तस्या निर्णयेन प्रसन्ना नासन् । सा स्वयमेकस्मिन् वार्तालापेऽवोचत्— "मम विवाहस्य विरुद्धन्तु समस्तराष्ट्रमासीत् ।" नात्र सन्देहोऽस्ति यद्भारतीयाः स्वनेतुः सकाशात्सर्वविधप्रेरणाग्रहणं कुर्वन्ति । देववत् तस्य पूजां कुर्वन्ति । अत एव तस्य प्रतिकूल - आचरणोपरि दुःखिताः विरुद्धाश्च भवन्ति । इन्दिरा च एवं विधस्य एव देशस्य महतः पथप्रदर्शकस्य पुत्री आसीत् अस्तु नाम तत् । इन्दिरया एव नूतनमिदं कार्यं न कृतमासीत् । पूर्वमपि नेहरू परिवारस्य कतिपय विवाहाः परजातिषु जाता आसन् । महात्मगान्धिन आदेशानुसारं विवाहः समारोहपूर्वकं जातः । इन्दिरा फिरोजौ तु साधारणविवाहकरणाय एव कटिबद्धावास्ताम् । तथापि बहूनां जनानामुपस्थितौ परिणयोऽयं जातः । विवाहेऽस्मिन् मदाम क्यूरी नामकविज्ञानपण्डितायाः पुत्री ईव क्यूरी अपि उपस्थिता आसीत् । तया विवाहस्य मनोहारिवर्णनमकारि । "भारतीय बाला इन्दिरापि लज्जाशीला बधुः जाता । विवाहात् - एक दिन पूर्वं बधुकृते एकः काचकंकणविक्रेता इन्द्रधनुषवर्णयुतानि काचकंकणानि समानयत् । इन्दिरा महदानन्देन स्वकृते काचकंकणा न समन्वेषयति स्म चिनोति स्म च । कया शाटिकया सार्कं कानि कंकणानि धारणीयानि- इत्यासीत्तस्या कंकणनिर्वाचने विचारणीयम् । साऽकथयत् - एता काचस्य वलयाः सन्ति तस्मात् - त्रुटितानि भवन्ति परन्तु स्वल्पमूल्यानि अतो बारं बारं क्रेतुं योग्यानि । आसां प्रभुतसंख्यायां धारणेन च कश्चिदपारानन्दसन्दोहः प्राप्यते ।"

इन्दिराया पितृष्वसा कृष्णाऽपि विवाहस्य रुचिकरवर्णनमकरोत् ।

बसन्तकाल आसीत् । इन्दिराया सख्यः सम्बन्धिन्यश्च सर्वाः नवबधु-उपहासकरणे संलग्ना आसन् । इन्दिरापि केनाप्युल्लासेनातिसुन्दरा प्रतीयते स्म । तया पाटलवर्णस्य सा शाटिका लग्नार्थं धारिता यस्याः सूत्रस्य निर्माणं तस्या पित्रा कारावासे कार्पाससूत्रेण कृतमासीत् । इयं शाटिका चतुष्कोणतः स्वर्णिमतारैर्ग्रथिता आसीत् । कदाचित् सा अस्मिन् परमोल्लासमयकालेऽपि उदासीना प्रतीयतेस्म । न जाने सा स्वमृतां मातरं सस्मार । अथवा पितुः परित्यागस्य दुःखं तामाकुलयत्ति स्म अस्य सहायको ऽद्य कोऽपि न भविष्यति तस्या गमनं पश्चात् ।

यथास्यात्तथा लग्नसमये श्री नेहरूस्तां गृहीत्वा विवाहमण्डप-मानयत् वैदिकरीत्याश्च विवाहः सम्पन्नोऽभूत् । सौभाग्यरात्रिप्रसङ्गेन ऊभौ इन्दिराफिरोजौ कश्मीरं गतौ । एषु दिवसेषु तत्र सौन्दर्यराशि-विकीर्ण आसीत्—प्रकृत्या । अपरस्मिन्नेव दिने सा स्वपितरं पत्रम-लिखत् इलाहाबादस्थमेकलं जवाहरं स्मृत्वा "पित ! यदि सम्भवम-भविष्यत्तु अत्रत्यशीतलपवनप्रषणमकरिष्यम् ।" जवाहरलालोऽपि पत्रम-वाप्य तारेणोत्तरं ददौ—"परन्तु तत्र प्रयागप्राप्याम्रफलानि क्व ?" सौभाग्यरात्रिदिनानि क्षणमिवापयातानि । इन्दिराफिरोजौ पर्वतीय-सौन्दर्यशीतलपवनमधुरजलादिसर्वं परित्यज्य क्षेत्राणामुष्णतायां पुनरायातौ । अत्र पुनः स एव संघर्ष, आंग्लानामत्याचाराः, आन्दोल-नानि कारागमनम् सर्वं पूर्ववत । इन्दिराया पिता, पितृष्वसाः सर्वेऽपि पुनः कारायां निक्षिप्ताः आसन् । एकस्मिन् – दिने छात्रैरेकस्या सभाया आयोजनमकारि । अत्र त्रिरंगध्वजान्दोलनकार्यक्रमः आसीत् । इन्दिरा यथैवात्र प्राप्ता आरक्षिभिः परितः छात्रेषु दण्डप्रहारः प्रारब्धः । इन्दिरया ध्वजः स्वहस्ते गृहीतः । यथैव तस्या हस्तोपरि यष्टिकाप्रहारः कृतस्तथैव सा ध्वजान्दोलनमकरोत । अतः यष्टिका तस्या हस्तयो-रपेक्षया भुजायां लग्ना पृष्टभागेऽपि बहुचिन्हानि यष्टिकानामासन् । तथापि सा स्व पितृपितामहमार्गोपरि गच्छन्ती सन्तोषमवाप । फिरोजः दिल्यां नेश्नल हैरल्डस्य प्रबन्धको जातः । इन्दिरया स्वकीयं लघुगृहं सम्यक्सज्जीकृतम् । स्वातन्त्र्यान्दोलने फिरोजः भूमिगतो जातः । एकस्मिन् दिने इन्दिराया भाषणमासीत् लक्ष्मणपुरे (लखनऊ) आंग्ले-गौरांगानां सेना तत्र प्रेषिता । यथैवेन्दिरा भाषणाय सज्जा जाता




# क्षमाजयन्तीकथानिकाविशेषाङ्कः

डा, रूपनारायण पाण्डयः,
प्र ना रा. रा. नगरम्, वाराणसी

विद्यते 'दिव्यज्योतिः' संस्कृतस्य सचित्र—मासिकम् । 'भारती-विहारः, मशोबरा, शिमला इति सङ्केततः प्राकाश्यं नीयमानस्य अस्य मासिकस्य सम्पादकः अस्ति आचार्य. श्री केशवशर्मा । आधुनिक-संस्कृतकवयित्रीषु पण्डिता क्षमा, प्रधान स्थानं धारयति । १८८० तमे खिष्टाब्दे जुलाई मासे जातया तया तुकारामचरितादीनि अनेकानि महाकाव्यानि कथाः च प्रणीतानि । तस्याः एव संस्मरणार्थं तस्याः जन्म-मासे 'दिव्यज्योतिः' इति नाम पत्रिकायाः जुलाई-अगस्तमासयोः कथानिकाविशेषाङ्कः प्राकाश्यं नीतः ।

विशेषाङ्के अस्मिन्-'प्रतीक्षा', 'पितृध्या', 'रेखा' पार्वती' अभिशापोऽयम्' को दण्डनीयः' कणिका', मुहम्मदखानः' 'पाशदण्डः' 'सुधा', 'उपहारः' 'निशान्तः' च इति कथानिकाः आचार्यकेशवशर्म-प्रणीताः प्रकाशिताः सन्ति . एताः कथानिकाः (लघुकथाः) राष्ट्रभक्तिं स्वसंस्कृतिनिष्ठां कर्तव्यपरायणतां, धर्मसम्प्रदायनिरपेक्षतां संस्कृतगौरवं च संवर्धयन्ति । विचारणीयम् इदं कथनम्- संस्कृताध्यापकप्राध्यापकैश्-छात्रैश्चापि संस्कृतिसंस्काररक्षार्थं किमपि सोत्साहं न क्रियते ।'

विशेषाङ्कोऽयं सर्वथा समभिनन्दनीयः । मन्ये-अग्रे अपि सम्पादक-महोदयः एतादृशान् विशेषाङ्कान् सम्पाद्य संस्कृतगौरवं वर्धयिष्यति ।

# श्यामला (वार्षिकी)

प्रकाशिका—हिमाचल कला संस्कृति भाषा अकादेमी, संगरमल-बिल्डिङ्ग, क्लिफ एण्ड एस्टेट, शिमला-१७०००१।

मूल्यम् :- २ रुप्यकमितम्।

सम्पादकः- डा. श्री वंशीराम शर्मा।

पत्रमिदं संस्कृते १९८९ ख्रीष्टाब्दे प्रारब्धम्। अतः प्रवेशांक एवास्माकं समक्षमस्ति। पत्रमिदं आकर्षकावरणयुतं विषयाश्च विभिन्नाः। गद्यपद्यमयभाषायाम्। क्वचित् - मुद्रणाशुद्धयः सन्ति। पत्रस्य सर्वविधोन्नतिः स्यादिति कामना।



# हसन्तुतराम्

लेखक :— श्री शशिकान्त शर्मा शास्त्री, आचार्यः।

प्राप्तिस्थानम् :- राजकीय माध्यमिक पाठशाला हारसी द्वारा—संघोल, जि० कांगड़ा - (हि. प्र.)

पुस्तकमिदं स्वल्पमूल्येन लभ्यम्। हास्यसाहित्यसम्बद्धमिदं पुस्तकम्। ये किल संस्कृते हास्यरचनाभावविषये संस्कृतलेखकान् हास्यरसरहितान् कथयन्ति तेषां कृते शोभनमिदमुत्तरम्। मुद्रणाशुद्धयः काश्चन सन्ति। सर्वैः पुस्तकमिदं सरलसंस्कृते रचितं द्रष्टव्यम्। लेखकस्य प्रयासः प्रशस्यः।

★

# आरण्यकम् (षाण्मासिकम्)

प्रकाशिका—संस्कृत प्रसार परिषद्-आरा (बिहार) वा मू. १० रु०।

१९८९ ख्रीष्टाब्दस्य युग्मांकोऽस्माकं समक्षमस्ति पत्रस्यास्य। पत्रस्य परामर्शदात्रिमण्डले पण्डित वासुदेव द्विवेदिसदृशाः अनुभवपूर्णाः विद्वांसः सन्ति, सम्पादकमण्डलेऽपि प्रख्यातविद्वांसः सन्ति। मुद्रणं शुद्धम्। विषयाः समाकर्षकाः।

●

# दूर्वा

प्रकाशिका—मध्यप्रदेश संस्कृत अकादेमी चार बंगला-मार्ग, सिविल-लाइन—भोपाल (म प्र.)

मूल्यम् - ५ रु. मितं प्रत्यङ्कम् ।

पत्रस्यास्य १९८९ खीष्ट्रीयाङ्को अगस्तनवाम्बरमासीयावस्माकं पार्श्वे स्तः । पत्रस्याकारः विशालः १८×२२=४ मितः । सम्पादकः-त्रिपाठी भास्कराचार्यः । मुद्रणं शुद्धं स्वच्छाक्षरैरलंकृतम् । आवरणं समाकर्षकं सुन्दरञ्च । विषयाः समाकर्षकाः गद्यपद्यमयाश्च ।

●

( ३२ पृष्ठस्य शेषः )

हिमाचल प्रदेशो देवभूमिरत्र नास्ति कोपि सन्देहः. वैज्ञानिकैरन्वेषणैरुद्घोषितं यत् "हिमाचलादारभ्य बद्रीनारायणपर्यन्तं विस्तृता पर्वतश्रृंखलाः अत्र सूक्ष्मशरीरेषु देवात्मनिवासः" एव्वेव पर्वतेषु पुरा ऋषयो मुनयश्च न्यवसन्, अन्तर्द्रष्टा महामुनिव्यासेन कुलक्षेत्रसमीपे स्थिते शतद्रुतीरे शान्ते रम्ये स्थाने व्यासपुरे (बिलासपुरे) महाभारत संकलनं कृतं प्रतीयते, मार्कण्डेयमुनिना तन्नामपुराणस्य रचनापि अत्रैव कृता. इति वर्तमानैः स्मृतिचिन्हैः सिध्यति । अत्रत्या भाषापि संस्कृतशब्दबहुला तथ्यमिदं प्रमाणयति. प्रचुरा संख्या संस्कृतशिक्षार्थिनां प्रदेशतो वहिरगच्छत्, एकोनशतानुपातेन हिन्दुबहुलेऽस्मिन् प्रदेशे संस्कृतस्य समुचिता शिक्षा व्यवस्था नास्ति, पंच सन्ति राजकीयाः संस्कृत-महाविद्यालया येषां संचालनं धनाभावादथस्मादवा कारणात् सन्तोषजनकं नास्ति, अहं यदविवक्षामि तदिदं यत्, साफल्येन संस्कृतशिक्षा, संस्कृतप्रचारः प्रसारश्च स्यात् तस्मै विभिन्नाः प्रयासा अपेक्षिताः । प्रथमं, उक्तानां महाविद्यालयानां पोषका (Feeders) संस्कृतपाठशालाः, सुतरामावश्यकाः । यत्र तु कापि संस्कृतपाठशाला राजकीया नास्ति, सर्वाः प्राईवेटरूपेण यथा कथंचन चलन्ति तासां सरकारीकरण कार्यम् विद्यालयेषु शिक्षाव्यवस्था चारुतरा कर्तव्या, अधिकोऽर्थस्तदर्थमुपलभ्यः, भाषाविभागाकदमीद्वाराऽधिकसंस्कृतप्रसारायार्थप्रावधानं कार्यं, तेषां विद्यालयानां निरीक्षणसंचालनव्यवस्थायै पृथक् संस्कृत-

निदेशालयोभीष्टः, चिरलम्बिता यांचाः (मांग) यत् संस्कृतमत्रानिवार्य-रूपेण पाठ्यक्रमे नियोज्यं, शासनेन केवलं त्रिसंख्याकासु तस्यानिवार्यता स्वीकृता । कथं न प्रथमकक्षात ? आंगलभाषा यदि प्रथमकक्षातः पाठयितुं शक्यते, कथं न संस्कृम् ? कास्ति बाधा आंगलभाषाभक्तानां केवलं मोहः किमु कारणं नास्ति ? परमिदं तु भविष्यति दृष्टव्य प्रकरणम् । कियदस्माकं संस्कृतप्रेमिनेतारः संस्कृतप्रचारप्रसाराय प्रयत्नपरा भवन्ति, आशा कर्तव्या, यस्य प्रदेशस्य मुख्यमन्त्री संस्कृत-प्रेमी द्वौ च विधायकौ, शास्त्रिणौ, तयोरेको विधानसभाध्यक्षः, इदानीं च शिक्षामन्त्री स्वयमस्ति सर्वे शासनसूत्रधाराः संस्कृतहितैषणः, अनुकूलस्य परिणामस्य प्रतीक्षा कार्या, सर्वेषां परीक्षा भविष्यति ।

पूर्वोक्तस्तु सरकारपक्षः अस्मत्पक्षे वयं किं कुर्मः ? किं च कर्तव्यमेतदपि विचारणीयम् संस्कृताध्यापकानां व्यक्तिगतहितं भवति, तेषां वेतनविसंगतयोऽपि नेयाः, पदोन्नतिनियमास्तदनुकूलाः स्युरेतत्प-र्यन्तमेव तेषां सीमा. गतवर्षे मया कार्यवशात्तत्र गतेन हिमाचल शिक्षा-निदेशालयप्रांगणे यज्ञस्यायोजनं दृष्टं, ज्ञातं यत् तदासीदधिकारिसद्-बुद्धिप्रदानाय येन ते "यज्ञाध्वर्यूणां हितं कुर्युः, अस्य यज्ञस्य तु संस्कृ-तप्रचारेण तनीयानपि सम्बन्धो नासीत्, मन्यते तु यज्ञस्यास्य दुरुपयोग एवासीत् हविश्चास्य व्यर्थो व्ययः, यज्ञास्तु पर्जन्योत्पादका भवन्ति यैरन्न-मुत्पाद्यते, वायुमण्डलशुद्धिस्तै जायते, भाषाविभागाकदमी द्वारा योजितेषु सम्मेलनेषु यदापि प्रदेशे संस्कृतविदुषां दर्शनावसरः लब्ध । मदीयोऽनु-रोधोऽयमेवाभवत्, यत् संस्कृतज्ञः संस्कृते वार्तालापोऽथ पत्रव्यवहारश्च संस्कृते कार्यः; संस्कृतपत्रिका पठनं, प्रेरणादायका लेखाः प्रेष्याः, सरलसंस्कृतसाहित्यसृजनप्रयासेन नूनं संस्कृतप्रचारः स्यात् । यांचा च कर्तव्या यदत्रैकं गुरुकुलम्" स्थापनीयं यस्मिन् बाला आरंभत आंगल-भाषापब्लिकस्कूलवत् संस्कृतशिक्षां प्राप्नुयुः, भृतिनिवृत्ता स्वसमयदानेन च संस्कृतप्रचारे योगदानं कार्यं येन ते ऋणमुक्ताः स्युः । यद्यपि लिखिते तथ्याधारिते लेखे किमपि प्रतिवादयोग्यं नास्ति तथापि काम-प्यालोचनां सहर्षं स्वीकरिष्यामि ।

— श्री नरोत्तमदत्त, शास्त्री, स्वतन्त्रतासेनानी
B. A. L. L. B. एडवोकेट
बिलासपुर

# मृच्छकटिके रसयोजना

श्री प्रेमलाल राणा

अभिनवगुप्तमते सामाजिक स्थायिभावाः नवरसानुभूत्या निर्मिता भवन्ति। संस्काररूपेण रत्यादिस्थायिभावाः सामाजिकात्मनि स्थिताः भवन्ति। स्थायीभावः साधारणीकृतरूपेणोपस्थितः विभावादिसामग्र्याभिव्यक्तः जायते तथाच तन्मयीभावेन वेदान्तसम्पर्कशून्यब्रह्मास्वादसदृशः परमानन्दरूपेणानुभूतः भवति।

भट्टनायकमते रसनिष्पत्तिनानुकार्ये रामादिषु नानुकर्तनटादिषु। अनुकर्तानुकार्यौ तटस्थौ उदासीनौ च स्त. तयोः न रसानुभूतिः। वास्तविकरसानुभूतिः सामाजिके भवति

काव्यप्रकाशकारेण मम्मटेन अन्यैः आचार्यैः प्रतिपादितरसस्वरूपात् चमत्कारपूर्णं प्रभावोत्पादकं रसस्वरूपमुल्लिखितमस्ति।

'कारणान्यथकार्याणि सहकारीणि यानि च।
रत्यादेः स्थायिनो लोके तानि चेन्नाट्य काव्ययोः॥
विभावाऽनुभावौ ततः कथ्यन्ते व्यभिचारिणः।"

व्यक्तः सः तैर्विभावाद्यैः स्थायीभावो रसः स्मृतः १ आचार्य विश्वनाथेनापि रसस्वरूपम् निम्नरूपेण प्रदर्शितमस्ति।

'विभावेनानुभावेन व्यक्तः संचारिणा तथा।
रसतामेति रत्यादिस्थायिभावः सचेतसाम्॥"

सहृदयपुरुषाणां हृदयेषु स्थितवासनारूप रत्यादिस्थायिभावा नवविभावानुभावसंचारिभावैरभिव्यक्ता रसस्वरूपम् प्राप्नुवन्ति।

रसानाम् संख्या–

रससंख्या तेषां स्वरूपञ्चः- व्यापारिण दशायां मानवो यादृशं अनुभूति करोति - इत्यवबाय्यं विशेषत अष्टविधाः स्थायिभावाः साहित्यशास्त्रे।

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
निर्वेदश्चापि नवमः स्थायीभावोऽस्ति ।

नाट्ये केवलं अष्टरसाः नव प्रतिपाद्यन्ते काव्ये तु शान्तोऽपि इत्यस्मिन् विषये आचार्य मम्मटेन काव्यप्रकाशे लिखितमस्ति रसानाम् संख्या विषये—

शृङ्गारहास्यकरुणरौद्र वीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ।
निर्वेदस्थायिभावोऽस्ति शान्तोऽपि नवमो रसः ।

साहित्यदर्पणकारो विश्वनाथोऽपि मम्मटमतस्य (रससंख्याविषये । पूर्ण-रूपेणानुसरणम् करोति वस्तुतः वात्सल्योऽपि रसः स्वतन्त्ररूपेण प्रतिष्ठितः गौडीयवैष्णवमते तु भक्तिरसोऽपि पृथक् अपि च सर्व श्रेष्ठरसः अस्तिअस्य-स्थापनाधार्मिकक्षेत्रे । सूक्ष्मविवेचको धनिकधनञ्जययोश्च मते रसा चतुर्विधाः एव । तयोर्मते रसानुभूतिकाले विकासविस्तारविक्षोभविक्षेपरूपाश्च अवस्थाः सन्ति । अत एव चतुर्विध एव रसः स्मृतः ।

विकासविस्तारक्षोभविक्षेपैः स चतुर्विधः
शृङ्गारवीरबीभत्सरौद्रेषु मनसः क्रमात्
हास्याद्भुतभयोत्कर्ष करुणानां त एव हि ॥

शृङ्गाराद्‌ हास्यरसोभवेत् रौद्ररसात् करुणरसोत्पत्ति जायते वीर रसात्-अद्भुतस्य तथाच बीभत्सरसात् भयानकरसोत्पत्तिः भवति । इत्येवं अवधारयितुम् शक्नोति ।

एवम् प्राचीनसाहित्याचार्यैः रसस्थायीभावविषयिणी या कल्पना कृता सा पूर्णरूपेण मनोवैज्ञानिकाधारे स्थापिता आसीत ।

आधुनिके काले अपि मनोवैज्ञानिकसिद्धान्ताम् अधिकृत्य तेषां मनोवैज्ञा-निकता प्रमाणिता अस्ति ।

आचार्य मम्मटेन तु काव्यप्रकाशे केवलं रसानाम् नामान्युदाहरणान्येवो-ल्लिखितानि परम् च विश्वनाथेन लक्षणान्युल्लिखितानि सन्ति ।

शृङ्गारादिनाम् स्वरूपमाह:–

शृङ्गार:-

शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
उत्तम प्रकृतिप्रायो रसः शृङ्गार इष्यते ॥
विप्रलम्भोऽथ संभोग इत्येष द्विविधो मतः ॥

हास्य:-

विकृताकारवाग्वेषचेष्टादेः कुहकाद्भवेत्हासः ।

करुण:-

इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत् ।

रौद्र:–

क्रोधः स्थायीभावो आलम्बनमरि
तच्चेष्टोद्दीपनं मुष्टिप्रहारादयः अनुभावाः
आक्षेपादयः स्युर्व्यभिचारिणः ॥

वीर:-

उत्तम प्रकृतिवीरः उत्साहस्थायिभावः विजेतव्यादयः आलम्बनविभावः विजेतव्यादिचेष्टाद्यार तस्योद्दीपनरूपी । सहायान्वेषणादय अनुभाव बृहतिगर्वादय सञ्चारिभावाः ।

भयानक:-

भयस्थायिभावः यस्मादुत्पद्यते भीतिस्तदालम्बनं चेष्टाघोरतरास्तस्यो द्दीपनं विवर्णतादयः अनुभावा जुगुप्सादयः व्यभिचारिभावाः ।

बीभत्स:-

जुगुप्सास्थायिभाव दुर्गन्धमूत्ररुधिरमेदस्यालम्बनं मतम् कृमिपाद्युद्दीपनं निष्ठीवनादय अनुभावा मोहोपस्मारादयः स्युर्व्यभिचारिणः ।

## अद्भुत:-

विस्मय स्थायिभावस्तु लोकातिमालम्बनं गुणानां महिमा उद्दीपन स्तम्भादय अनुभावा: वितर्कादिय: व्यभिचारणः।

## शान्त:-

शम: स्थायिभाव: परमात्मास्वरूप आलम्बनमिष्यते महापुरुषाश्रमादय: तस्योद्दीपनरूपिण:, रोमाञ्चादयश्चानुभावा: निर्वेदाद्या व्यभिचारिण:।

## वत्सल:-

स्फुटं चमत्कारितया वत्सलं च रसं विदु:, स्थायीवत्सलतास्नेह: पुत्राद्यालम्बनं उद्दीपनानि तच्चेष्टा आलिङ्गनादय अनुभावा: अनिष्टाशङ्कादय: स्युर्संचारिण:।

## रसयोजना:-

मृच्छकटिकम् संस्कृतनाटकेषु अत्यन्तं महत्वपूर्णं स्थानं धारयते। रसयोजनायां तु शूद्रक: सिद्धहस्त एव आसीत् हास्यरसस्य अभिव्यञ्जनायाम् मृच्छकटिकम् संस्कृतसाहित्याकाशे देदीप्यमानरत्नम् अस्मिन् नाटके शूद्रकेण सामाजिकजीवनस्य वास्तविकं हृदयद्रावकं चिताकर्षक यथार्थञ्च चित्रणं सम्पादितमस्ति। मृच्छकटिकम् रूपकस्य प्रकरम् नामकभेदस्य कोटिम-लङ्करोति। नाटकस्यास्य कथानक: कविकल्पितोऽस्ति संयोगश्रृङ्गारोऽस्याङ्गीरस: करुणहास्यभयानक वीरबीभत्सादय अङ्गभूता: सन्ति।

## संयोजना:-

मृच्छकटिके चारुदत वसन्तसेनयो अनुरागस्य चित्रणमस्ति वसन्तसेनैका सामान्या नायिकास्ति सामान्यनायिकाया: अनुरागी रसस्य कोटिम् नालङ्करोति तत रसाभासएव जायते। तथापि गणिकावसन्तसेना या अनुराग: श्रेष्ठकुलोत्पन्नकुलनारीवद् अनन्यारक्तास्ति। अन्ते सा वधूपदमधिगच्छति एवम् वसन्तसेनाया: अनुराग: रसस्य कोटिं प्राप्नोति नायको चारुदत: ब्राह्मणोऽस्ति। य: दरिद्रावस्थायामपि धर्मार्थकामेषु सिद्धिप्रवायण: भवति। स: अस्मिभ गुणानाम् भण्डार:।

दीनानां कल्पवृक्ष: स्वगुणफलनत: सज्जनानां कुटुम्बी आदर्श: शिक्षितानां सुचरितनिकष: समुद्र:।



# उत्तरभारतीयं वैदिकसम्मेलनम्

शिमला अत्र १९, २० दिवसयोः (जुलाई) मासस्य. सम्मेलनमिदं उत्तरभारतीयवैदिकप्रतिष्ठानस्य तत्वावधाने जातम्। अस्य उद्घाटनं प्रदेशमुख्यमन्त्रिणा श्री शान्ताकुमारेण कृतम्। अध्यक्षता च तत्कालीन-हि. प्र. विधानसभाध्यक्षेण श्रीराधारमण शास्त्रिणा विहिता।

लालबहादुरकेन्द्रीयसंस्कृतविद्यापीठस्योपकुलपतिना डा० मण्डन-मिश्रेण मुख्यातिथिरूपेण समागमनं कृतम्। प्रदेशमुख्यमन्त्री च संस्कृतस्यानिवार्यपाठनाय देशस्य नेतृत्वं करणाय च संस्कृतप्रसारविषये प्रेरितः। मुख्यमन्त्रिणा स्वीये भाषणे संस्कृतस्य प्रसाराय सर्वमपि करिष्यते इति समाश्वासनं दत्तम्। अध्यक्षपदात् श्री राधारमण शास्त्री प्रावोचत् यदत्र प्रदेशे मुख्यमन्त्रिणः सहयोगेन संस्कृतस्यावश्यकाध्याप-नाय सर्वकार्यं कृतं स्यादिति पूर्णा आशा। श्री शास्त्री संस्कृते प्रावोचत् समारोहेऽस्मिन् सहस्रशः-लोकाः समागमन् ? षट्सप्तसंख्यकाः विधा-यका अपि भाग जगृहुः। आचार्यचरणैः श्रीदिवाकरैः सर्वेभ्योऽपि संस्कृतप्रसारकर्मणि सहयोगदानाय प्रार्थिम्। संस्कृतशोधसंस्थानस्य-च मुख्यप्रकाशनानि विशिष्टमान्यजनेभ्यः समर्पितानि। प्रतिष्ठान संचालकः श्री किरीट जोशी अपि स्वभाषणे वेदज्ञानस्य महत्वं प्राका-शयत् ? विद्वद्भिः वैदिकमंगलाचरण व्यधायि। चतुर्वेदानां विषये वैदिकविद्वद्भिः प्रकाशः पातितः। हरियाणातो हितसाधिकायाः सम्पादकः डा० सत्यदेववर्मा महोदयोऽप्यत्रागत आसीत्। अस्य परिवारः संस्कृत-भाषी वर्तते। प्रदेशस्य संस्कृतविद्वद्भिः, छात्रैश्चापि समारोहेऽस्मिन् भागो गृहीतः।



# नवरात्रपूजा

संस्कृतशोधसंस्थानेऽस्मिन् वर्षे श्रीदेवीभागवतपुराणपारायणं दुर्गासप्तशती पाठश्च महता समारोहेण कृतमभूत्। मातु-र्जगदम्बिकायाः विधानपूर्वकं पूजनं प्रतिदिनं कृतम्। सर्वैरा-चार्यपारिवारिकैः नवाहपर्यन्तमुपवासोऽपि विहितः।



# संस्कृतदिवससमारोहः सम्पन्नः

सिरमौरजनपदे संस्कृतदिवससमारोहः २३-८-९० तिथौ रा. उ. वि. बोगधारे उल्लासेन सम्पन्नः। भाषासंस्कृतिविभागेन समायोजितस्यास्य समारोहस्य अध्यक्षपदं मान्यजिलाधीशः श्री भीमसेनः व्यभूषयत्। अध्यक्षमहाभागेन दीपे प्रज्वालिते सति स्थानीयविद्यालयस्य कन्याभिः साभिनयं सम्पादितया सरस्वतीवन्दनया सममेव कार्यक्रमस्य शुभारम्भः सञ्जातः।

अवसरेऽस्मिन् भाषण - श्लोकोच्चारणप्रतियोगिताः सम्पादिताः। प्रतियोगितासु द्वादशविद्यालयानां - त्रिंशत् प्रतियोगिनः समुपस्थिताः। भाषण-श्लोकोच्चारणयोः- प्रथमं - पुरस्कारं, रा. व. मा. वि. सरांहस्य छात्रा सविता नेहरूः अलभत्। भाषणप्रतियोगितायां द्वितीयं स्थानं बोगधारस्य सुरेशकुमारः तृतीयं च सरांहस्य कनिका भारद्वाज अलभत्। श्लोकोच्चारणप्रतियोगितायाः द्वितीयं पुरस्कारं बोगधारस्य कुमारी शकुन्तला तृतीयं चास्यैव विद्यालयस्य सत्या कुमारी प्राप्तवती।

प्रतियोगिताऽनन्तरं रा० उ० वि० बोगधारस्य विद्यार्थिभिः सांस्कृतिककार्यक्रमः प्रस्तुतः। समग्रोऽपि कार्यक्रमः संस्कृते सत्यपि नवीनपरिवेशे सन् अतीव रुचिकरः समभवत् 'संस्कृतभाषायां कव्वाली' गीतानि दर्शकैः श्रोतृभिश्च विशेषेण प्रशंसितानि। राही' इत्युपाह्वस्य ओम्प्रकाश शास्त्रिणः निर्देशने अभीनीतं डा० मथुरादत्तपाण्डेयलिखितं संस्कृतनाटकं नारदमोहिनीयम्' दर्शकैः प्रशंसितम् नाटकेऽस्मिन् विद्यार्थिभिः सह ओम्प्रकाश राही तथा च जियालाल शास्त्री, उभाभ्यां संस्कृताध्यापकाभ्यामपि अभिनयो विहितः।

कार्यक्रमस्यान्ते जिलाभाषाधिकारी श्री सीतारामस्य सहयोगेन अध्यक्षमहोदयः विजेतृभ्यः पारितोषिकानि प्रायच्छत्। नाटकस्य रंगकर्मिभ्यः भाषाविभागेन ७५० रूप्यकाणि प्रदत्तानि। एवं पुरस्कारं गृहीतुं यदा निर्देशकः नायकश्च ओम्प्रकाश 'राही' नाटकाभिनये एव 'नारायण-नारायण' इत्युवाचस्तदा अध्यक्षोऽपि मन्दं हसन् 'नारायण' इति कथयन् पारितोषिकं तस्मै प्रायच्छत्।

— सिरमौर (हि० प्र०)

## हि. प्र. संस्कृतशिक्षक परिषद् लाहौल-स्पीति

केलांगस्य शिवमन्दिरे उक्तपरिषदो निर्वाचनमजनि। अध्यक्षता जगत्पालशास्त्रिणा कृता। एतन्निर्वाचनं ९०-९१ वर्षयोः कृते जातम्। देशराजशास्त्रिणा गतवर्ष-आयव्ययविवरणं दत्तम्। निम्नपदाधिकारिणश्च सर्वसम्मत्या निर्वाचिताः।

१ संरक्षकः- श्री कृष्णचन्द्र शास्त्री, ... रा. मा. वि. थिरोट।
२. प्रधानः- श्री देशराजशर्मा. ... रा. उ. वि. सिस्सू।
३ व. उ. प्रधानः- परमानन्दः ... रा. मा. वि. तेलिंग।
४. उ ,, खेमराज शर्मा ... रा. उ. वि. किब्बर।
५ महासचिवः- सुखदेव वर्मा ... रा. सं. मा. वि. केलंग।
६ प्रचारसचिव :- प्यारेलाल. ... रा. उ. वि. शाम्शा।
७ सहायक प्रचारसचिवः- देवराजः ... रा. उ. वि. गोंधला
८ कोषाध्यक्षः- ऋषिरामः ,, ,,
९ लेखाकारः- पवनकुमारः ... रा. मा. वि. मडग्रां

— कार्यकारिणी सदस्याः —

१ श्री शरदेन्दु कान्तः ... रा. मा. बि. धूरनाथ।
२ रामप्यारुः ... ,, ,, दरिंचा।
३ रूपसिंहः- ... ,, ,, जिस्पा।
४ सन्तोषकुमारः ... रा. उ. वि. लोट।
५ कृष्णुराम ... ,, ,, , उदयपुर।
६ सतीशकुमार ... ,, , जाह्लमा।



## डा० पालीवालः सम्मानितः

नागपुरान्तर्गत इतवारीस्थानस्थितश्रीब्रह्मकर्मवर्द्धिनीसंस्कृत-महाविद्यालय उपाचार्यः श्री किशोरीलाल पालीवालः दीर्घकालीन-संस्कृतसेवाकरणाय गतसंस्कृतदिवससमारोहे बम्बई नगरे महाराष्ट्र-राज्यशिक्षामन्त्रिणा ऊर्णवस्त्रश्रीफल पुष्पमाल्यार्पणपूर्वकं सम्मानितः। समारोहेऽस्मिन् श्रीमधुकर राव चौधरी विधानसभाध्यक्षः, श्री विलास राव देशमुखः शिक्षामन्त्री श्री रणजितदेशमुखः, राज्यशिक्षामन्त्री, शिक्षानिर्देशकः श्री ऋषिकुमारः इत्यादयः सज्जनाः उपस्थिताः आसन्। अन्ये छात्राश्च सभायामासन्।

# भूयशः शोचनीयं विचारणीयं च संस्कृतप्रेमिभिः

१९९० ख्रीष्टाब्दस्य मई मासीयेऽङ्के हिमाचलप्रदेशराजकीय-संस्कृतमहाविद्यालयप्राध्यापकसंघेन नवनिर्वाचितविधायक श्री दीनानाथ-शास्त्रिमहोदयस्य नेतृत्वे प्रदेशमुख्यमन्त्रिणे श्री शान्ताकुमाराय दत्तस्य ज्ञापनस्य समाचारः पठितः। पठित्वा च यन्निवेद्यते तत्खलु ईर्ष्याद्वेषव शान्नैवापितु रोषवशादेव। रोषश्च स्नेहपुटपरिपाकेन जायते एषस्तु मनसः क्षोभकारणम्। तस्मादेव च निम्न प्रकारेण निवेद्यते :—

१ प्रथमो रोषः— श्री शान्ताकुमारेण संस्कृते शपथमग्राहि, वर्तमाने तस्य संस्कृतप्रेम्णः प्रेरणादायक प्रदर्शनमेव मन्ये। परन्तदेव श्री दीनानाथ श्री राधारमणशास्त्रिद्वयेन हिन्दीभाषायां शपथ-ग्रहण कियदन्तं शोभनीयं प्रतीयत, भवेत्तद्राष्ट्रभाषायामेव ?

२ द्वितीयो रोषः- संस्कृतप्राध्यापकैः कथं न संस्कृते ज्ञापनं दत्तम् ? सचिवसुविधायै तस्यानुवादो हिन्द्यां कर्तुमशक्यत। सनिश्चयमि-दमुत्साहजनकमभविष्यत्।

३ तृतीयरोषोऽस्ति पत्रिकासम्पादकेन श्रीकेशवशर्मणा कथं न टिप्पणीरूपेण द्वित्राः पंक्तयः प्रदत्ताः। निष्पक्षपत्रकारिताया इयमपेक्षा वर्तते।

दिव्यज्योतिः पत्रिकायाः माध्यमेन आचार्यमहोदया निःसन्देहं संस्कृतप्रसारप्रचारयोर्गुरुतरं कार्यं कुर्वन्तः सन्ति। अद्यत्वे महती आवश्यकता संस्कृतप्रेमिभिरनुभूयते यत्—संस्कृतिस्रोतसः संस्कृतस्य प्रचारः प्रसारश्च भूयात्। बहुधा बहुभिर्वचसा च तत् प्रागीयतापि परं कर्मणा कीदृशं योगदानं तेषामिति सर्वथा शोचनीयम्।

ज्ञापनसन्दर्भे यदुल्लेखनीय तदपि शोचनीयतरम्। तत्र पंच यांचाः अंकिताः सन्ति। पंचैव तेषां वेतनमानविसंगति दूरीकरण-पदोन्नति-स्थायिकरणप्रभृतयः सन्ति। कापि याञ्चा संस्कृत प्रसारप्रचार सम्बद्धा न वर्तते। सर्वं व्यक्तिगतं स्वार्थपरकञ्च संस्कृतहिताय किमपि प्रस्तोतुं किमु ते स्वीयं कर्तव्यं नानुभवन्? नात्र मे कोऽपि संकोचः एतत् कथयितुं यद् यावदन्तं कोऽपि शास्त्री आचार्यः प्राध्यापकश्च विद्यमानः स "भृत्यः" स्वस्य स्वपरिवारसदस्यानामुदरं भर्तुं तस्य लक्ष्यम् तस्य कर्तव्यमध्यापनम्। शासनं तत्कृते तं वेतनं ददाति। ततोऽधिकं किमपि नास्ति। कोऽपि भृत्यो यदि कथयति 'यदहं सेवकः" मन्ये स सेवाशब्दस्यैवापमानः। अद्यत्वे सेवाशब्दस्य दुरुपयोगं एव क्रियते। फलेच्छारहितं लोककल्याणाय यत्कर्म क्रियते सा सेवा। भृत्याः न सन्ति वस्तुतः सेवकाः। यतस्ते तस्यै सेवायै वेतनं गृह्णन्ति। ते न सन्ति जनसेवकाः। अपितु शासनसेवकाः। कोऽपि तथाकथितः संस्कृतप्रेमी यदि भृतिनिवृत्तौ स्वीयसमयदानेनार्थव्ययेन च किमपि संस्कृतप्रचाराय प्रसाराय च करोति तदस्ति योगदानम्। परमिदानीं सर्वमन्यथा दृश्यते। (शेषः २३ पृष्ठे) ★

# उज्ज्वलभविष्यकृतेऽतीतस्मरणम्

जगदीश्वरस्य जगदम्बिकायाश्च परमानुकम्पया दिव्यज्योतिषः चतुस्त्रिंशत् - वर्षाणि गताङ्केन साकं पूर्तिं गतानि। एष पञ्चत्रिंशत्तमो वर्षः प्रारभते तस्य चायं प्रथमोऽङ्को भवतां कृपालुपाठकानां, लेखकानां, शुभचिन्तकानां च सेवायामुपायनी क्रियते।

सार्धत्रयदशकेषु अस्यां यात्रायामस्माभिरुत्थानप्रपातयोर्बहूनि दृश्यान्यवलोकितानि। यदा शिमला पञ्चाम्बुप्रान्ते आसीत्तदास्माभिरतत्रत्य करो प्रशासनं दिव्यज्योतिषः साहाय्य करणाय प्रार्थितम्। शिक्षासचिवेन दिव्यज्योतिष - आवश्यकक्रयकरणाय सर्वाभ्योऽपि राजकीयाराजकीयसंस्थाप्रधानाध्यापकेभ्यो निर्देशो दत्तः। परन्तु संस्कृतस्याज्ञानवशात् - प्रधानाध्यापकानामुपेक्षया संस्कृताध्यापकानाञ्च हीनभावनया सहस्रसंख्यकसंस्थाभ्यः वर्षपर्यन्तं पत्रं ऋणं कृत्वापि प्रेषितम् परन्तु शतचतुष्टयादूर्ध्वं न ताभ्यः सस्थाभ्यः शुल्कं प्राप्तम् यतोहि यत्र तु जागरूकसंस्कृताध्यापका आसन् ताभिः संस्थाभिस्तु शुल्कं प्रहितं परन्तु तासां संख्या चतुःशतादूर्ध्वं नासीत्। अपराभिः सहस्रसंस्थाभिः प्रेषितेष्वपि बहुषु स्मारकेषु शुल्कं न प्रेषितम्। यथाकथञ्चिदस्मादाघातात् पत्ररक्षाआचार्याणां प्रयासे जाता। ऋणं शनैः २ प्रत्यावर्तितम् कतिपय वर्षानन्तरम्।

पश्चात् मुद्रणालयाध्यक्षेण स्वीया विवशता पत्रमुद्रणे प्रकटिता। तस्य कथनमासीत् "प्रतिमासं यथाकालं मुद्रणकर्गजशुल्कं न प्राप्यते। संस्कृताक्षरसंयोजनं हानिकरं भवति अस्माकं कृते तस्मात् – पत्रमिद समाप्तं करणीयं भवद्भिः। किं केनापि दण्डेन दण्डिताः यूयं यदिदं सर्वथा हानिकरं कार्यं कुरुथ? एकदिनमपि यदि पत्रं पश्चात् प्रकाश्यते स्म तु पत्रालयाधिकारिणो बहुमूल्येन प्रेषयन्ति स्म पत्रम्। तेऽपि यदा कृपाकरणाय प्रार्थ्यन्ते स्म तु गालिप्रदानपूर्वकं प्रताड़यन्ति स्म यत्किमर्थं तादृशं पत्रं प्रकाश्यते यस्य प्रेषणं नियतकाले कर्तुं न शक्यते भवद्भिः? एतत्सर्वं दृष्ट्वा आचार्यचरणै भूमिभागं प्रशासनस्य पार्श्वे रक्षयित्वापि पत्रप्रकाशनकार्यं सञ्चालितमेव। शनैः २ बहुभिर्महानुभावैरत्रार्थिकसहयोगदानं कृतमपि तथापि अस्माकं भिक्षावृत्तिरधुनापि प्रचलमाना वर्तते। यतोहि तत्साहाय्यं केवलं शाकाय वा स्याल्लवणाय वा स्याद् - वत् आसीत्। तथापि तेनास्माकमुत्साहो द्विगुणो भवति स्म वयं च कर्मणि अस्मिन् सर्वदा सर्वतो भावेन सलग्ना एव स्थिताः।

परन्तु इदमस्माकं शौर्यं नास्ति। एतस्य सर्वमपि श्रेयः — पाठकलेखकशुभचिन्तकेभ्योऽस्माकं गच्छति भवतु नाम तेषां संख्या नगण्या तथापि तेऽस्माक उत्साहकर्तारः सन्ति। अनेन चासंख्यकाव्यनाटक - कथाप्रहेलिका—संस्मरण–हास्य - महिला - बाल - समाचारसम्बन्धितं साहित्यं मौलिकरूपेण प्रकाशमायातम्। असंख्याः लेखकाः, प्रचारकाः, कवयश्च संस्कृते पत्रस्यास्य माध्यमेन जाताः- इति सर्वमपि सन्तोषावहमस्माकं कृते। पत्रेण सर्वदा सामयिकसाहित्यप्रकाशनमकारि। अनेके विशेषाङ्काः प्रकाशिताः असंख्यकपुस्तकानां नवानां च परिचयः प्रदत्तः। सर्वतोऽपि मुख्यं वस्तु वर्तते पत्रस्य यथाकालप्रकाशनं तदपि पूर्णरूपेण गतेषु वर्षेष निर्व्यूढम्

हिमाचलप्रशासनेनापि यदा श्रीकर्मसिंहः शिक्षामन्त्री आसीत्तदा पत्रस्यास्य क्रयं कर्तुं प्रदेशस्य शिक्षासस्थाः आदिष्टा परन्तु तदपि पञ्चाम्बुप्रान्तआदेश इव निरर्थकं जातं मुख्याध्यापकानामौदासैन्यात संस्कृताध्यापकानाञ्च संस्कृतं प्रति हीनभावनावशात। अतो मया एक बारं पुनः संस्कृताध्यापकप्राध्यापकाः प्रार्थ्यन्ते यत्तैः संस्कृतप्रसारकर्मणि सहयोगो देयः दिव्यज्योतिषश्चाधिकाधिकग्राहकनिर्माणं कार्यम्। तेन पत्रमात्मनिर्भरं भविष्यति चिराय च तेन संस्कृतसेवां कर्तुं प्रभविष्यति। —केशव शर्मा

R. N. 6384/57 — न 33/एस. एम. / 10/89



मा. स्व. लालबहादुर शास्त्री

# श्रद्धाऽञ्जलयः

येन देशस्य सेवायै स्वकीयं जीवनं हुतम् ।
कृषाणानाञ्च सन्मित्रं सैनिकानां तथैव च ॥
प्रतीको देशभूषायाः भाषायाश्चापि रक्षकः ।
संस्कृतस्य समुद्धर्ता संहर्ता वैरिणां तथा ॥
तं स्मरामोऽद्य गर्वेण श्रद्धया परयाऽपि च ।
येन संस्कृतरक्षायै–प्रयासाः सततं कृताः ॥







श्री राधारमण शास्त्री, हि. प्रदेशस्य शिक्षामन्त्री पूर्वाध्यक्षश्च विधानसभायाः। अनेनागामिवर्षाय प्रतिमण्डलमध्यापक-पुरस्कारघोषणा कृता श्रेष्ठाध्यापकेभ्यो-ऽध्यापकदिवसे ! अधुनैवायं हरारे इति विदेशस्थानं गत आसीत् । तत्र च विधान-लोकसभाध्यक्षाणां सम्मेलने प्रदेशस्य प्रतिनिधित्वं चकार ।





# विषयानुक्रमः



## दिव्यज्योति:


हि० क० सं०भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकागतमुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति ।

हिमाचल प्रदेश—पंजाब-हरियाणा-जम्मूकश्मीर - मध्य प्रदेश—राजस्थान—महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।


पत्रस्य उद्देश्यानि तथा नियमा:

सरलसरससुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकल कलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योति:" प्रतिमासं पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशितं भवति
पत्रस्य वार्षिक मूल्य ३५ रु० अर्धवार्षिकं १८ रु० एकस्याङ्कस्य च रु० २-५० भवति ।
वर्षारम्भः अक्तूबर—मासतः भवति ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति ।
ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोबरा, शिमला-१७१००७ हि० प्र०" इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

## परिचय:


संस्थापका: तथा आद्यसम्पादका: आचार्यश्रीदिवाकरदत्त शर्माण:, — दूरभाष: 78459
राष्ट्रपतिसम्मानिता:
प्रधानसम्पादक:— आचार्य केशव शर्मा एम. ए., एम, फिल, साहित्यरत्नम् — „ 8 200
दिव्यज्योति: कार्यालय: भारती विहार:, मशोबरा, शिमला-७ (हि. प्र.)
मुद्रक: प्रकाशक:—
भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि. प्र.)
स्वामी:- श्रीमती आचार्य रत्नकुमारी शर्मा

❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋

नवम्बर. १९९० मार्गशीर्ष: २०४७ — वर्षम्—३५ अङ्क २
वार्षिक मूल्यम् ३५ रु०

# प्रियदर्शिनी

(गताङ्कादग्रे)

गौरांगसैनिकः गुलिकाप्रहारकरणाय सज्जोऽभूत् । न जाने विद्युत्प्रकाश इव कुतः फिरोजस्तत्रोपस्थितस्तं सैनिकञ्च निगृह्य भूमिसादकरोत् । एवं किल तयोः स्वातन्त्र्यसंघर्षस्तु अनवरतं प्राचलदेव । कदाचित् कारागारे कदाचिच्च क्षेत्रेषु संघर्षः ।

१२

प्रश्नः— किम् १९४७ खीष्टाब्दस्य १४ दिवसीयरात्रिकाले यदा भवत्या पित्रा स्वतन्त्रभारतस्य प्रधानामात्यरूपेण भाषणं दत्तमासीत्-तद्दिनं भवत्या जीवने महदानन्दकरमभूत् ?

उत्तरः – सत्यमेव मम हृदयं गौरवेण गुरुरासीत् तद्दिने ।

परन्तु-आनन्दोऽयं क्षणिक एवाभूत् यतोहि सीमास्थपाकस्थाने जातिसंघर्षः प्रारब्धः । तस्य प्रतिकाररूपोऽत्रापि विपुलहिंसकरूपेण प्रकाटोऽभूत् । गान्धिना महात्मना आमरणानशनं हिंसाप्रतिरोधाय कृतम् । इन्दिरया स्वयं सेवकनेतृत्वं धृतम् । यत्र कुत्रापि हिंसकघटना भवन्ति नेहरू एकल एव तत्र गत्वा तां शमयति परन्तु इन्दिरा इतोऽपि पूर्वं तस्य सुरक्षायाः प्रबन्धमकरोत् । सा स्वयमपि निर्भीका जनसमूहेऽवगच्छत्-हिंसाशमनं चाकरोत् । एकस्मिन् दिने पाकस्थानसमाचारेण क्षुब्धैस्ततोऽत्रायातैः शरणार्थिभिः एकः मुस्लिमपरिवारोऽतीव निर्घनः गृहत्यागाय विवशीकृतः । अनेके बालक — बालिका-दम्पतेरासन् । इन्दिरया चिन्तितं यत् क्षुब्धाः लोका न केवलं गृहनिष्कासनमेवैतेषां करिष्यन्ति अपितु घातयिष्यन्ति - एतान् । तस्या यानचालकोऽपि यानं त्यक्त्वा पलायितः । सा निर्भयं विशाले क्रुद्धजनसम्मर्दे विद्युदिव प्रविष्टा । केनचित् तस्याः शिरस्थदुकूलमपि समाकृष्टम् । लोकाः सततं गालिप्रदाने संलग्नाः आसन् । परन्तु तया न कस्यापि चिन्ता कृता । सा त्वरया गृहे प्रविष्टा एककोणे सर्वोऽपि परिवारः स्वमृत्यु-क्षणप्रतीक्षायामासीत् । इन्दिरया ते सर्वेऽपि वराकाः स्वसाकं चलितुमुक्ताः । न कस्यापि साहसो जातस्तस्या प्रतिरोधाय तेषां परिपीड़नाय च । सा परिवारं तं स्वगृहं नीतवती तत्र च शिविरे सर्वेषां भोजननिवासव्यवस्था कृताऽभूत् ।

पश्चात् - महात्मनोऽनशनमपि न्नोटितमासीत् सर्वैः देशवासिभिः हिंसायाः शमनाय शपथग्रहणमकारि । इन्दिरा स्व पितृस्वसाभिः साकं गान्धिनं द्रष्टुं गता ? महात्मना हसितम् - किमेषा राजकुमारी मां द्रष्टुं समायाता । ततश्च तस्या परिवारविषये पृष्ठम् । पुत्रयो: कुशलञ्चापि । इन्दिरा स्नेहेनानेनाभिभूता जाता । सा प्रणम्य प्रतिनिवृत्ता । परन्तु तदानीं सा इदं न जानातिस्म यद्दिनद्वयानन्तरमस्य जीवनमेव शान्तं भविष्यति अन्तिमदर्शनञ्चास्य इदं भविता ।

१३

नेहरूर्यदा, भारतस्य प्रधानमन्त्री जातस्तदा कस्य चित्तादृशस्य जनस्यावश्यकता सततं तत्रासीद्योहि नेहरूमहाभागस्य सर्वविषव्यवस्था-मवलोकयेत् । विशेषतश्च चाटुकारेभ्यस्तं रक्षेत् । परिस्थितिभिः इन्दिरा तत्र नियुक्ताऽभूत् । न च तस्या अतिरिक्त: कश्चिदपि तत्सर्वं साधयितुं क्षमः आसीत् । तया स्वजीवनस्य स्वर्णमयाष्टादशवर्षकालः स्वपितुः सेवायां व्यत्यापितः । त्यागस्यैषा पराकाष्ठा भवति । तया नेहरुणा सह अनेकदेशदर्शनमकारि । राजनीतौ भारतीयनेतारस्तस्याः प्रतिभाया कौशलं स्वीचक्रुः । विभिन्नप्रदेशेभ्यः आमन्त्रणानि आगच्छ-न्तिस्म यदापि निर्वाचनकालो भवति तस्या निर्वाचनाय लोकसभा-राज्यसभाकृतेऽपि बहुवारं प्रस्तावाः समायाताः परन्तु न तया ते स्वीकृताः । सा विश्वभ्रमणं कृत्वा श्रान्ताऽभूत् । परन्तु तस्या मनसि सन्तोषोऽयमभूद्यत् - पूर्वं तस्य पित्रा पत्रैर्विश्व-इतिहासस्य किरणदर्शनेन सा कृतार्थिता अद्य च प्रत्यक्षदर्शनं तस्य जायमान इतिहासस्य तया क्रियते । विदेशेषु भ्रमन्ती अपि सा भारतं न विसस्मार । पर्णकुटीरेषु, बुभुक्षिता बालकबालिका, श्रमिकाः, समस्तदेशस्य बुभुक्षाशान्ति कारका कृषकाः येऽर्धरोटिकां भुक्त्वा एव जीवनं यापयन्ति सर्वे एते चित्रलिखिता इव तस्या अग्रत: समायान्तिस्म । क एतेषां बुभुक्षां शमयिष्यति, कश्च वस्त्र निवासदानं करिष्यति एभ्यः कोटि कोटि-जनेभ्यः १९५९ खीष्टाव्दे सा कांग्रेस अध्यक्षपदे नियुक्ताऽभूत् इदानीं कांग्रेससंस्था त्रुटिता स्फुटिता चासीत् । तस्या पितामहोऽपि संस्थाया अध्यक्षः वारद्वयं जातः । पिता तु अनेक बारम् । इदानीं इन्दिरा तृतीया आसीद्या संस्थाया अस्याः प्रधाना जाता । इयं तदानीं द्विचत्वारिंशद्वर्ष-

देशीया आसीत्। तस्या पिता च प्रथमवारं यदा अध्यक्षो जातस्तु स एक चत्वारिंशत् - वर्षीय आसीत्।

एवं फिरोजः संसद्सदस्यरूपेण इन्दिरा च कांग्रेसाऽध्यक्षरूपेण जनसेवाकर्मणि लग्नौ । अकस्मात् - फिरोजस्योपरि हृदयरोगेणाघातः कृतः। इन्दिरा तस्य शिरोभागे समुपस्थाय सर्वविधचिकित्सां सेवां च तस्मै प्रायच्छत् । ततश्च तस्य स्वास्थ्यलाभाय पुत्रयुगलेन सह सा कश्मीर गता । असौ पूर्णरूपेण स्वस्थो जातः । परन्तु पुनः क्षेत्रेषु आगत्य देशसेवायां संलग्नौ । १९६० खीष्टाब्दे फिरोजो द्वितीय-हृदयाघातेन समाक्रान्तोऽवसितश्च इन्दिराया कृतेषु बहुतरप्रयासेष्वपि रक्षायाः । तदानीमिन्दिरया कथितमासीत्—"ममान्तरालः शतधाः त्रुटितः स्फुटितश्चास्ति ।" धैर्यं धारयित्वा पुनश्च देशसेवाकर्मणि लग्ना। यद्यपि तस्या पार्श्वे किमपि मन्त्रस्तु तादृशो नासीद्येन सा कांग्रेससंस्थासुधारमकरिष्यद् तथापि तया संस्थायां नवजीवन-सञ्चारो विहितः।

१९६४ खीष्टाब्दे श्री जवाहर लालोऽपि स्वजीवनलीलां पूरयामास। इदानीं नास्ति कोऽप्यन्यः सहायको मामकीनः । मया स्वयमेव सर्वं करणीयं भविष्यति इति इन्दिरया निश्चयः कृतः। सा सर्वैस्तत्कालीनराजनयज्ञैः कांग्रेसनेतृभिश्च प्रधानमन्त्रित्वपदाय निर्वाचने स्थातुं प्रेरितापि न तेषामभ्यर्थनां स्वीचकार ।

पितुः—मृत्युस्तस्या मनसि गहनमाघातमकरोत्। कतिपयहोरा-पर्यन्तं सा विचित्रदशायामासीत्। स्वपितुः मृतदेहं सा निर्निमेषमवलोकयत् । गृहेऽन्यपारिवारिकसम्बन्धिसदस्यैः साकं सापि रात्रिजागरणमकरोत् । परन्तु प्रातः काले सा ऊर्ध्वतलान्नीचैर्गता। चतुर्विंशति होराभ्यः सा निराहारा आसीत्। तया पाचका निर्दिष्टा यत्सर्वेषां कृते प्रातराशव्यवस्था कृता स्यात् । प्रातराशः सज्जीभूतस्तया सर्वेभ्यः प्रधानमन्त्रिणः आवासकर्मकरेभ्यः प्रातराशः प्रदत्तः । सर्वानपि भोजयित्वा स्नानादिना सर्वान् सज्जीकृत्य स्वच्छवसनधारणाय सर्वे समादिष्टाः 'तया सर्वे उक्ता पितृपादस्यान्तिमयात्रायां भवद्भिः सर्वथा स्वच्छैः, भुक्त्वा, स्नात्वा एव गन्तव्यं किमसौ दुःखितो न भविष्यति

यदि भवद्भिर्मलिनैः, बुभुक्षितै रनुगतम्"?

इदानीं तयाऽनुभूतं यत्-स्वपितुः प्रतिज्ञा तया पूरणीया या तेन जनानां सेवाया कृता आसीत्। स्वीयः सर्वविधभारश्च स्वस्कन्धयोरुपरिधारणीयः।

१४

१९६५ खीष्टाब्दे इन्दिरा श्री लालबहादुर शास्त्रिणः मन्त्रिमण्डले भारतस्य सूचनाप्रसारणमन्त्रिपदमलंचकार। यद्यपि तस्या अयं शिक्षणकाल एवासीत् प्राशासनिकक्षेत्रे तथापि यया योग्यतया तया मन्त्रिपदस्य कार्यसञ्चालनमकारि तत्प्रशंसास्पदमस्ति। सूचनाप्रसारणमन्त्रालयस्यैकोऽधिकारी अस्या कार्यक्षमताविषये प्रावोचद्यत्—'सा सर्वामपि लेख्यपत्रावलिं तथा सावधानतया पठतिस्म यथा पत्राणामनुभयतो रिक्तस्थानेषु आवश्यकता ऽनुसारं स्वकीयटिप्पणं ददाति स्म। यदि प्रशंसार्हकार्यं कृतं भवति तु, तस्यापि प्रशंसा कुरुते स्म, यदि च किमप्यनुचितं भवति तु तत्कृतेऽपि स्वरोषं प्राकटयत् लिलेख च। एकस्यान्याधिकारिणोऽनुसारं तस्या कार्यक्षमता विषये ज्ञातुं शक्यते। स होवाच - 'एक बारं विशालकायापत्रावलिः तस्या समक्षं नीताऽभवत्। तया सा पठिता तत्र चावश्यकटिप्पणयो निवेशिता केवलं विंशतिक्षणकाले।"

दूरदर्शनप्रसाराय तयाऽत्र प्रभूतं प्रशंसनीयं च कार्यमकारि एवमेव चित्रपटसमुत्थानक्षेत्रेऽपि अस्या कार्यं प्राशंसन्—लोकाः तस्या विचारः आसीद्यत् - कलापूर्णचित्रपटनिर्माणं कार्यम्। सा रूसदेशं तथा चामेरिकामपि - अस्मिन् काले गता। सर्वेऽपि - अधिकारिणस्तया आश्वस्ता यत्र राजनैतिकप्रभावेण किमपि कार्यं करणीयं रोधनीयम्वा। यदुक्तं वर्तते तत् - निर्भीकतया विधेयम्। यदा कश्मीरे पाकसैनिकप्रवेश - विषयः समायातः सा कश्मीरेषु गता। तत्र सैनिकानां मध्ये भाषणमपि कृतम्। पश्चात् पाकभारतयोर्युद्धं बभूव। ताशकन्द गमनकाले श्री लालबहादुरशास्त्रिणः साऽन्यमन्त्रिवत् तं वायुयानेन प्रेषणाय 'वायुयानकेन्द्रं' गता परन्तु सा न जानाति स्म यत्तस्यान्तिमदर्शनं सा चकार उभयोश्च तदन्तिममिलनं भविष्यति अथवा शास्त्रिणो महाप्रयाणेन तस्या उत्तरदायित्वं वृद्धिमेष्यति।

भारतीयलोकसभाया संसद्भवनस्य केन्द्रीयकक्षस्य भित्तिभिरनेकावर्तनपरिवर्तनान्यवलोकितानि । विविधरोमाञ्चकघटनास्थलमिदम् । १९२९ ख्रीष्टाब्दस्याप्रैलमासीयाष्टमतिथौ भगतसिंहबटुकेश्वरदत्ताभ्यामत्रैव बम्—निक्षेपो विहितः । तेषु दिनेषु आंग्लप्रशासकोऽत्र स्वमन्त्रिपरिषदा सहोपविशति स्म केचन भारतीयसदस्या अप्यंगुल्यग्रगण्यास्तदानीमेषु - आसन् । अस्मादेव केन्द्रीयकक्षात् - तौ निगृहीतौ यदा नीयमानावास्ताम् तदा भगतसिंह आह - नायं बमः कस्य चिदपि मारणाय प्रस्फोटितोऽस्ति केवलं वधिरप्रशासन किमपि श्रृणुयादेत्तदर्थमेवास्य प्रस्फोटः । सत्यमपि चेदमासीत अस्य बमस्य विस्फोटेन न केवलं कक्षमेव गुंजितमपितु समस्तब्रिटिशसाम्राज्यस्याधार एव कम्पित आसीत् ।

बमस्य शब्देनांग्लप्रशासकास्तथा भयविह्वला बभुवुर्यत्तेषु केचन पलायित्वा केचन धूमपूर्णस्नानशौचागारेषु प्रच्छन्नाः, इतरे च फलकानामधस्ताद्गताः । परन्तु तेषु भारतीय एकस्तादृशोऽप्यासीत् यो हि स्वकीयासनादपि नोत्थितो न च भीत एव जातः । अयमासीद् दुग्धधवलवसनधारी पं. मोतीलाल नेहरुः— श्री जवाहरलालस्य पिता प्रियदर्शिन्याश्च पितामहः ।

१९४७ ख्रीष्टाब्दस्यागस्त्यमासीयायां चतुर्दशतमदिनस्य निशायां द्वादशवादनावसरेऽत्रैवांग्लानामन्तिमप्रशासकस्य लार्ड लुई माउण्टवेटनस्योपस्थितौ स्वतन्त्रभारतस्य प्रथमप्रधानमन्त्रिणः पं. जवाहरलालस्य मार्मिकशब्दगुञ्जनमपि अस्मिन्नेव कक्षे जातमासीत् :—

"अर्धरात्रिकाले यदा निखिलं जगत् सुप्तमस्ति भारतं नवजीवनस्य स्वतन्त्रतायाश्च वातावरणे स्वकीयाक्षीणि समुद्घाटयिष्यति । तदपि क्षणमायाति एव यदितिहासे कादाचित्कमेव भवति, यदा वयं पुराणक्षेत्रं त्यजामो नवीनञ्च प्रविशामः तदा एकस्य युगस्य समाप्तिर्भवति अथ च वर्षेभ्यस्तिरस्कृतात्मा राष्ट्रस्य स्व हुंकारं कुरुते..." एते आसन् ते शब्दाः ।

सप्तदशवर्षानन्तरं १९६४ खीष्टाब्दस्य जूनमासीये २ दिनेऽस्मिन्नेव केन्द्रीयकक्षे चिरप्रचलितप्रश्नस्योत्तरं प्राप्तं देशेन। प्रश्नः—आसीत्-नेहरोः पश्चात्कः? सहमत्याः लोकतान्त्रिकप्रकारेण विनम्रतायाः आत्मत्यागस्य च मूर्तिस्वरूपः श्री लालबहादुर शास्त्री देशस्य द्वितीयः प्रधानामात्यो निर्वाचितो ऽभूत् उत्तररूपेण।

अस्मिन्नेव केन्द्रीयकक्षे पुनरेकदा १९६६ खीष्टाब्दस्य जनवरीमासीये १९ तमे दिने विश्वस्य दृष्टिरत्रासीत् श्र लालबहादुर शास्त्रिणो महाप्रयाणमभूत् - ताशकन्दे रूसदेशे। ५५२ लोकसभासदस्यास्तदानीमासन्। कृतेष्वपि बहुतरप्रयासेषु सर्वसम्मत्याः—दलस्य नेतुर्निर्वाचनं कठिनमभूत्। श्री मोरार जी देसाई इन्दिराया बिरोधे स्थितोऽभूत्। तेन पूर्णप्रयासाः कृता येनासौ विजयी भवेत्। परन्तु निश्चितं किमपि नासीत्। मतदानकालः समुपस्थितः। इन्दिरा स्वकारयानादवतीर्णा। तया तूलशाटिका तूलवदेव शुभ्रा नीलवर्णस्य कोणैरलंकृता धृता आसीत्। स्कन्धो परि बातादवर्णस्य शालः शोभते स्म। तस्योपरि रक्तपाटलपुष्पं ग्रथितमासीत्। सा सर्वेभ्यः सदस्येभ्यः नमस्कारोपायनी कुर्वन्ती मोरारजीदेसाई समीपं गता। समीपं गत्वा नमस्कृत्य तेन हस्तमेलनमकरोत्। तस्या पिता एवमेव करोति स्म। तस्या मुखोपरि प्रफुल्लता शान्तिश्चास्ताम्। क्षणादेव महा ाष्ट्रस्यैकः सदस्यः समागत्य इन्दिरायै वर्धापनानि उवाच। सर्वैर्ज्ञातं यदस्या विजयो जातः। कक्षे च रक्तपाटलः जयतु, जयतु जवाहरलालः-इति जयघोषो जातः। प्रियदर्शिन्याः ३५५ मतान्यासन् यदा मोरारजी महोदयस्य १६९ मतानि। एवं किल १८३ मतानां प्रभूतमतैः सा विजयं लेभे कक्षोऽयं चित्राकर्षकानां चित्रपटनिर्मातॄणाञ्च चित्राकर्षकयन्त्राणां खटखटशब्देन पुनरेकवारं बहु गुंजितः। प्रियदर्शिनी प्रधानामात्या निर्वाचिताऽभूत्।

१९

१९६६ खीष्टाब्दस्य जनवरीमासीये १९ तमे दिने प्रियदर्शिनी कांग्रेससंस्थायाः अध्यक्षा जाता। एतस्य पञ्चदिनानन्तरं सा भारतस्य प्रधानामात्यपदमलञ्चकार। यदि तस्या इच्छा अभविष्यत्तु सा स्वपितुः मृत्योः प्रश्चादपि पदमिममधिग्रहीतुं समर्था आसीत्

परन्तु तया स्वनिर्पेक्षतायाः परिचयो दत्तः। तदानीं च सा प्रधानामात्य-पदोत्तरदायित्ववहने पितृगमनशोकेन समर्थापि नासीत्। परन्तु श्री लालबहादुर शास्त्रिणः प्रयाणानन्तरं–सा महदुत्तरदायित्वं देशसेवायाः स्वीचकार।

मुम्बापुरीत प्रकाश्यमानस्य 'ब्लिट्ज" इति वार्तापत्रस्य सम्पादकः श्री करञ्जिया एकदा श्री जवाहरलालमपृच्छत् तन्मृत्यो र्मासद्वयपूर्वम्-"देशस्य नेतृत्वमिदानीं कः करिष्यति ? जवाहरोऽवदत्–"सम्भवतो देशस्य नेतृत्वं सामूहिकरूपेण भविष्यति। कामराजः, श्री लालबहादुरः शास्त्री श्री गुलजारी लाल नन्दा च। मन्मते कामराज जननेता वर्ततेऽस्माकं सिद्धान्तेन च मौलिकरूपेण बद्धोऽस्ति। श्री लालबहादुरः गांधीवादी राष्ट्रियभावनापूर्णः बिनम्रो ऽजातशत्रुश्च व्यवहारेण वर्तते। श्री गुलजारी लाल नन्दा प्रशासकः सत्यनिष्ठश्च वर्तते।" यदा पत्र-कारेण पुनः पृष्ठोऽसौ यत्कथं न इन्दिराया नामग्रहणं भवद्भिः क्रियते ? तदा तेनोक्तम् - मद्विरोधिनो बहुबारं कथयन्ति यन्मया सा देशस्य प्रधानमन्त्रित्वकृते सज्जा क्रियते। एतेन ते जानन्ति स्म यदेष जबाहरो ज्वलितो भविष्यति अनेन। परन्तु न मया सा तत्कृते कदापि प्रोत्साहिता प्रेरिता वा सत्यमिदं ज्ञातव्यं भवद्भिः। पत्रकारः पुनराह यदा सा सर्वप्रकारेण एतस्य योग्या वर्तते तदापि भवद्भिरेवं विचार्यते। श्री जवाहरोऽवदत यदि समाजो भारतीया जनता तां कमप्युत्तरदायित्व-वहनयोग्यां स्वीकरिष्यति तदा न मम कोऽपि बिरोधोऽत्र वर्तते परन्तु यदि मम नामोपरि तत्प्रभावेन वा सा कस्यापि उच्चपदस्योपरि नियुज्यते तु तेन मम आत्मा तुष्टो न भविष्यति। यदा लोकैः सा कांग्रेसदलस्य प्रधानपदे नियुक्तास्तदा मया कश्चिद् विरोधो विहितः ? स्व योग्यतया सामर्थ्येन वा कश्चित् किमपि भवतु परन्तु परम्परात्वेनैव केवलमहं तां प्रधानमन्त्रिपदाय प्रेरयितुं कदापि साहसं कर्तुं शक्तो नास्मि। सत्यतायाः सिद्धान्तानां च प्रतिकूलमिदं सर्वमस्ति।

१७

प्रधानमन्त्रिपदे कार्यं कुर्वन्त्या तया बहुभिः साहसिकनिर्णयैर्देश-स्योन्नयनं कृतम्। ये किल ईर्ष्यावशात् नेहरुणा सह विरोधं कुर्वन्ति स्म

ते सर्वेऽपि एकत्रीभूता प्रियदर्शिन्या कीर्तिविमर्दनमिच्छुकाः जाताः। तया स्वपूर्णशक्त्या योग्यतया च सर्वेऽपि विजिता। कांग्रेससंस्था एव तस्या नाम्ना प्रसिद्धाऽभूत्। तया ऽनुमोदितः श्री वी. वी. गिरिः राष्ट्रस्य राष्ट्रपतिपदे प्रभूतमतैर्जयं लेभे।

तत्पश्चात्तया देशस्य निर्धनजनानां कल्याणाय तया सर्वेषां कोषाणां राष्ट्रियकरणं कृतम् यतोहि पूर्वं एते कोषाः केवलं धनिकानां हस्ते आसन्। निर्धनानां कृषाणानाञ्च कृते नासीदेषां कोऽपि सहयोगः। राष्ट्रियकरणानन्तरमेतेषां शाखा भारतस्य कोणानुकोण ग्रामेषु प्रसृताः। कोटिशो जना अनेन लाभान्विता बभूवुः।

भारतस्य पूर्वराज्ञां कृते प्रशासनेन वार्षिकानुदानं विशालधनराशिरूपेण दीयते स्म। एतेषामेव मौर्ख्येण पारस्परिक द्वेषेण च भारतोपरि विदेशिशासनं जातम्। देशस्य च संस्कृतिसभ्यताविनाशे वैदेशिकैः महती सफलता प्राप्ता। अनया एतेषां विरोधस्य चिन्ता न कृता लोककल्याणाय प्रभूतधनराशिप्रदानस्य च प्रतिरोधो विहितः।

न्यायालया न्यायदानेऽसमर्था आसन् तत्र महीयान् —विलम्बो निर्णयदाने भवति स्म। दण्ड्या न्यायालयेषु गत्वा दशपञ्चदशवर्षपर्यन्तमपि दण्डं नार्हन्ति स्म। तत्रापि तयाऽवश्यकसंशोधनमकारि।

केन्द्रीयप्राशासनिकाधिकारिणः मन्त्रिणामुपेक्षां कृत्वा यथेच्छं व्यवहरन्ति स्म। अत्रापि तया स्वप्रभावेण तेषामावश्यकावर्तनपरिवर्तनमकारि यत्प्रधानमन्त्रिणां कृतेऽतीव कठिनकार्यमासीत्।

विदेशेषु भारतस्यास्तित्वं तया पूर्णरूपेण प्रतिष्ठापितम्। प्रगतिशीलभारतस्य च प्रतिष्ठा वृद्धिं नीता।

पाकिस्थानेन सर्वदा भारतकृते विभिन्नसमस्या उत्पाद्यन्ते स्म। तस्य पूर्वीयभागे यदा स्वतन्त्रैस्तत्रत्यशासकैः सत्तामदचूर्णितैस्तत्र वसतां हिन्दूनां विशेषतश्च स्त्रीणां घोरापमानकरणमारब्धम्— तया स्वनिष्ठाबन्तः सैनिकास्तत्र प्रेषिताः धर्मस्य स्थापना तत्र कृता जितं शासनं च पुनरपि तत्रत्यान् समर्प्य स्व सांस्कृतिकविजयध्वजं तत्र प्रसार्य भारतस्य प्राचीना परम्परा पुनरपि प्रतिष्ठापिता। बंगलादेशस्य

प्रतिष्ठापना जाता। पाकिस्थानेन स्वीयोऽर्धभागः पराजितोऽत्र। इदं कार्यं प्रियदर्शिन्या अतिरिक्तमन्यः कश्चिदपि कर्तुं समर्थो नाभविष्यत्।





एकेन पत्रकारेण प्रियदर्शिन्या सह साक्षात्कारकाले एते प्रश्नाः पृष्टाः :—

प्रश्नः- किं भवतीदमनुभवति यत्तत्र भवत्याः प्रधानमन्त्रिपदाय

निर्वाचनेन भारतीयराजनीतौ नारीभूमिकाया कश्चिन्नव मार्गोद्घाटितोऽभवत् ?

उत्तरः—मम प्रधानमन्त्रिपदोपरि निर्वाचनेन भारते न किमपि आश्चर्यजनकं जातम् । यतोहि—अत्र तु चिरात् स्त्रियः स्वतन्त्रतासंग्रामे तथा सामाजिकजीवने समानभागित्वं बहन्ति । अस्माकं भारते महिलाः शिल्पकाराः, राजदूतपदप्रतिष्ठिताः राज्यपालाः, प्रशासिकाः ग्रामपञ्चायतसदस्याश्च सन्ति । अतोऽहं प्रधानमन्त्रिपदाय निर्वाचिता जाता चेदियं वार्ता भारताय नैव परन्तु पश्चिमजगत्कृतेऽवश्यमेवाश्चर्यकरी घटना अत्रार्धभागे महिलाः सन्ति अर्थात्-तासां संख्याऽर्धमिता अतस्ताभिरपि कार्यं करणीयमस्ति किमपि विशिष्टमपि । सैव स्थितिर्वर्तते मामकीनापि ।

प्रश्नः— किं भारतस्य रूसामेरिकादेशाभ्यां सह समानसंबधस्थापना कर्तुं शक्यते ।

उत्तरः— भारतन्तु सर्वैः सह मैत्रीपूर्णसम्बन्धान् कामयते । अमेरिकारूसाभ्यां सहापि तादृशाः एव सम्बन्धा अस्माकं सन्ति । चीनेन सहापि यदि सम्मानजनकाधारेण मैत्री सम्भवेत्तु तदर्थमपि वयं सन्नद्धाः स्म ।

एकोऽन्यः पत्रकारोऽपृच्छत्ः—

"—भवत्याः पुत्रद्वयन्तु इंगलैण्डे ऽस्ति किं तत्र भवती एकाकित्वं नानुभवति ?

उत्तरः— "अहमेकाकिनी—अनुभवेयमित्यस्य कृते मम पार्श्वे समय एव नास्ति ।

'फिलाडेल्फिया बुलेटिन" नामकस्य पत्रस्य सम्वाददाता अलिखत्-योहि वाशिंगटन नगरे निवसति स्म—तदानीं च इन्दिरा अमेरिकादेशं जिगमिषतिस्म—"महिलासु इन्दिरा प्रथमा महिला भविष्यति या अमेरिकादेशं पञ्चाशतकोटिमितजनानां प्रधानमन्त्रिरूपेणागमिष्यति । वाशिंगटनः दिदृक्षते यत्सा कीदृशी वर्तते तथा भारतस्य कोटि २ जनानां विषये सा किं कथयति ?"

पश्चात् - प्रियदर्शिन्याः विषयेऽमेरिकादेशस्य पत्रपत्रिकाभिः— आकाशवाणि दूरदर्शनाभ्याञ्च तावान् - प्रचारस्तस्याः कृतो यावान्न कस्यापि तद्देशगतस्य मुख्यातिथेः कृतोऽभूत् । अमेरिकातो भारतागमन-काले सा इंग्लैण्डे तत्रत्य प्रधानामात्यं हैरल्डविल्सनं तथा च रूसदेशीय-प्रधानामात्यं कोसिगिनमप्यमिलत् मास्को नगरे । परन्तु तस्याः मनस्तु भारते एवातिष्ठत् यत्कथं सा कुटीरेषु, क्षेत्रेषु च निवसतां निर्धनानां कृषाणानाञ्च कृते रोटिकावस्त्रगृहादीनां व्यवस्थां कर्तुं मर्हा भविष्यति येन ते सर्वे सुखिनः स्युः ।

एतन्मध्य एव तस्याः पुत्रस्य श्रीसंजयगांधिनोऽवसानमपि जातम् । एवं किल पुत्रपतिपितृवियुक्ताऽपि सा साहसं न तत्याज । देशस्य प्रशासनञ्च सफलतयाऽकरोत् ।



(सैनिकोच्चाधिकारिणां रक्षामन्त्रिणश्च मध्ये प्रियदर्शिनी)

संस्कृतं प्रति अपि यदा २ तस्या ध्यानमाकृष्टमभूत् सा साहाय्यमकरोत् । अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्य सा श्री लालबहादुरशास्त्रिणो ऽ वसामानन्तरमध्यक्षतां स्वीचकार । कतिपय-अ० भा० संस्कृतसाहित्यसम्मेलनाध्यक्षतामप्यकरोत् ।

तस्या वर्चस्वमसहमाना विरोधिनः एकत्रिता जाताः । देशे च तादृशी स्थितिरुत्पादिता येन'सा निर्वाचने पराास्ता । देशेऽन्यदलशासनं जातम् आपातकाले सा तस्या सहयोगिभिरेवान्धकारे निपातिता तेनैव च तस्याः पराजयो जातः । परन्तु विरोधिदलशासनं स्वार्थपरतया सार्धद्वयवर्षकाले एव छिन्नभिन्नं जातम् एतन्मध्ये सा हिमाचलस्य चामुण्डाधामतः मातुर्जगदम्बिकायाधामदर्शनक्रममारब्धवती भारतस्य सर्वेषां तीर्थस्थानानां दर्शनोपरान्तं निर्वाचने पुनरवतीर्णा विजयं च प्रभूतं लब्धवती । एकदा सा सम्पूर्णानन्दसंस्कृतविश्वविद्यालयेऽपि गता तत्समुत्थानाय चादिष्टवती ।

यदा पाकस्थानप्रशिक्षितातंकवादिभिः पञ्चाम्बुप्रान्ते प्रवेशो विहितः पञ्जाबस्य च भारतात् छिन्नकरणयोजना निर्मिता पाकस्थानेन तदाऽचिरादेवानया परमदुःखेन -स्वर्णमन्दिरे भारतस्य परमपावनतीर्थ-स्थले शिष्यवेषेण प्रविष्टानामसंख्यदेशद्रोहिणां विनाशाय सेना प्रेषणमकारि एवं किल भारतस्य भुजकर्तनाय-विदेशिषड्यन्त्र विनाश्य तस्य रक्षाऽनया स्वप्राणानपि संकटे निपात्य कृता ।

पश्चाच्च कैश्चित्तस्या एव विश्वस्तशिष्यआरक्षिभिः सा घातिता-इति हं हो... स्व मृत्योः दिनद्वयपूर्वं तयोक्तमासीत् —' मम मृत्योः पश्चात् -मम रक्तस्य एक एकबिन्दुरपि भारतस्य एकतां सुदृढां करिष्यति - इति ।"

अनन्तरं तत्पुत्रो राजीवः प्रधानमन्त्री जातः । मातुः कृपया च तेनाभूतपूर्वमताधिक्यं प्राप्तम् ।

एवं किल भारतीय – इतिहासे प्रियदर्शिन्या नाम ताव स्थास्यति यावद्देशोऽस्ति नात्र कापि विचिकित्सेति शम् ।

— इति आचार्य श्रीकेशवशर्मणा निर्मिता संस्कृतकथा सरिता पूर्णा ।

# वेदार्थविध्वंसात्मकः अदृष्टवादः

— डा॰ सत्यदेव निगमालंकारः



नवीनमीमांसकानां अदृष्टवादो अपूर्ववादो वा वेदार्थबाधकः सिद्धान्तः। वेदमन्त्राणां यशोगानं कुर्वन् तत्राह महर्षिः पतञ्जलिः—

एकः शब्दः सम्यग्ज्ञातः सुप्रयुक्त स्वर्गे लोके कामधुग्भवति ॥
(महाभाष्यम्)

एतैर्मीमांसकैः अस्मात् सुप्रयुक्त इति, शब्दः परिसमापितः। सम्यग् ज्ञातः "इत्यस्यार्थं कुर्वन्त्येते सम्यगुच्चारितः" इति। एतदर्थमेवैतैः यज्ञा विध्वंसिताः सहैव वेदार्थोऽपि दूषितः। यज्ञप्रक्रियाया मूलतत्वं ज्ञातुं द्वौ शब्दौ सम्यक् ज्ञातव्यौ —

तेज एव श्रद्धा, सत्यमाज्यम् अहुयतयै सत्यं श्रद्धायाम् ॥
शतपथ ११-५-४-१ ॥

सम्प्रति मीमांसकानां कथनानुसारमेव उदा-त्तानुदा-त्तस्वरितानां सम्यग् ज्ञानानन्तरं सम्यग्मन्त्रोच्चारणपूर्वकञ्च केवलमात्रं घृतमग्नौ पातयेच्चेत् लब्धं यज्ञस्य पूर्णमेव फलम् इति। यतोहि अदृष्ट एव सर्वाणि कृच्छ्राणि दूरीकृत्य इष्टसिद्धिं प्रयच्छति। सोऽयमदृष्टवादः समेषामन्धानुकरणानां प्राणः।

शतपथग्रन्थानुसारमग्निः प्रतीकः, तस्य च श्रद्धाप्रत्यायनीयः प्रतीकः प्रत्यक्ष प्रत्यायन यश्चादृष्टः, अर्थादग्निहोत्रेण यदा जुहोति तदाऽस्याः स्थूलक्रियायाः गर्भे श्रद्धायां सत्यस्याहुतिरिति सूक्ष्मेयं भावना अन्तर्निहिता भवति, अदृष्टश्चायम् विज्ञाय चेममाचरणेन जीवने नृणां सुखं भवति। विपरीतञ्चा मध्यकालीनप्रज्ञाः मीमासंका अवबुध्यन्ते यत् विधिपूर्वकं मन्त्रोच्चारणेनाग्नौ घतपातनमात्रेणैव च यज्ञः सम्पूर्णः, तदैव च यजमानस्य पारलौकिककोषागारे अदृष्टस्य कोषः समागतः। अत्र सम्यग्ज्ञातः "इत्यनन्तरं सुप्रयुक्तः" इत्यस्य न किमपि प्रयोजनमलं साधितं निखिलमपि "सम्यगुच्चारितः"

इत्यनेन वाक्येन मीमांसकानामदृष्टस्य केवलमेव प्रतीकेन सह सम्बन्धः, न च कोऽपि प्रत्यायनीयः । अत एव शतपथादयः ग्रन्थाः क्रीडनकीयमिव प्रतीयन्ते ।

अस्य चादृष्टशब्दस्यासम्यगवबोधेन कथंकरः भयंकरः परिणामः समभवत् नायमधुना कथनस्य विषयः । शतपथब्राह्मणस्य एकमेव प्रमाणमत्र प्रस्तूयते —

"तद्धैतज्जनको वैदेहः याज्ञवल्क्यम् पप्रच्छ वेत्थाग्निहोत्रं याज्ञवल्क्या-इति । वेद सम्राडिति । किमिति पय एवेति । २ यत् पयो न स्यात् केन जुहुया इति । व्रीहियवाभ्यामिति । यत् व्रीहियवौ न स्याताम् केन जुहुया इति या आरण्या ओषधय इति । यदाऽऽरण्या ओषधयो न स्युः केन जुहुया इति । वानस्पत्येनेति । यद् वानस्पत्यं न स्यात् केन जुहुया इत्यद्भिरिति यदापो न स्युः केन जुहुया इति ।३। होवाच न वा इह तर्हि किंचनासीदथैतदहूयतैव सत्यं श्रद्धायामिति । वेत्थ याज्ञवल्क्याग्निहोत्रं धेनुश्शतन्ते ददामीति होवाच । ४ । शतपथ ११-२-२-४ ।

एतदर्थमस्मिन्नेव प्रकरणे प्रथमे काण्डे सम्मुल्लिखितं यत्—

वाग्ह वा एतस्याग्निहोत्रस्याग्निहोत्री । मन एव वत्सस्तदिदं मनश्च वाक च समानमेव सन्तानेव तस्मात् समान्या रज्वा वत्सं च मातरं चाभिदधाति तेज एव श्रद्धा सत्यमाज्यम् ।१

एवं समुपस्थितेऽस्मिन् विषये केचिद् ब्रूयुः यत्, एते अग्निहोत्रादयो यज्ञा नाटका एव । येषु शूर्वाग्निहोत्रहवणीपुरोडाशादयो अभिनयं कुर्वन्ति । तान् प्रत्येवम् ब्रूमः यदेतत् सत्यम् ।

भरतनाट्यशास्त्रे प्रथमे अध्याये—"यजुर्वेदादभिनय" इति समुल्लि-खितम् । नाट्यशास्त्रे भरतेन अभिनयः यजुर्वेदात् गृहीतः । इत्थमेवाधुनापि अभिनय-कर्तॄन् स्त्रीपुरुषान् 'पात्रम्" इति नाम्ना एव सम्बोधयन्ति । यज्ञेषु यत् कार्यं पात्रैः नीयते, क्रियते तदेव कार्यम् नाट्यशास्त्रे स्त्रीपुरुषैः । किन्तु नाम तु तत्रापि "पात्रम्" इति । एवमेव न किन्तु शतपथ ग्रन्थे अग्निहोत्र काव्यं इति नाम्ना उच्चारितम् —

तदप्येते श्लोकाः । किं स्विद् विद्वान् प्रवसत्यग्निहोत्री गृहेभ्यः कथम-स्य काव्यम् । कथं सन्ततोऽग्निरिति । कथंस्विदस्यानपप्रोषितं भवतीत्येवैत-

दाह ।५। यो जविष्ठो भुवनेषु स विद्वान् प्रवसन् विदे तथा तदस्य काव्यं तथा सन्ततोऽग्निरिति । मन एवैतदाह मनसैवानपप्रोषितं भवतीति ६।

अस्य प्रतीकप्रत्यायनीयस्य रहस्यमविजानन्तः मध्यकालीनमीमांसकाः कथमदूषयन् वेदार्थमिदन्तु अस्मिन्नेवैकेनोदाहरणेन अवबुध्यते । तस्माददृष्टवादात् रक्षणीयो वेदार्थः तथा च रक्षणीया भगवती श्रुतिरिति ।

— प्रवक्ता संस्कृत विभाग गुरुकुल कांगड़ी
विश्व विद्यालय, हरिद्वार



## वर्ण - अव्यवस्था ?

१. अव्यवस्थाऽद्य संजाता वर्णानां च व्यवस्थया-
आरक्षणेन संभूता ह्यव्यवस्थाऽद्य भीषणा ।
२. कुतःमानवजं शास्त्रं कर्मजं जाति जन्मजम्—
कुतः सामाजिकी याता सारिणी सा रसातलम् ?
३. ब्राह्मणो वेद पाठी यः परजीवी परान्नभुक्
रचयामास शास्त्राणि लक्षकोटिशतानि च ।
४ राज्यासने समासीनः - नृपतिर्नरपुंगवः—
प्रजानां पालनं कुर्वन् निजापत्यदुहितृवत ।
५. राजकोषं प्रजाकोषं मनुते जनसेवक -
वणिजः देशरक्षायं धनं धान्यं च दुर्लभम्- ।
६. संगृह्य त्रिषु वर्णेषु - वितरन्ति दिवानिशन्
शिल्पिनः निजशिल्पेन कुर्वन्ति कर्म निष्ठया- ।
७. संसारे ख्यातिमापन्नाः निजकर्मपरायणाः-
पूर्वं भारतराज्येषु गणराज्यानि चाभवन् ।
८ वस्तूनां विनिमयं कृत्वा शासनानि चलन्तिहि
नापितः कुंभकारश्च तक्षकः लोहघाटकः ।
९. स्वर्णकारश्च शिल्पी — ब्राह्मणः वेदपारगः-
वस्त्राणां सीवकश्चैव—याचन्ते नव मुद्रिकाः ।

१०. वस्तूनां विनिमयं कृत्वा—वृत्तिं साधयन्तिहि ।
मुद्राणां संचयो नास्ति - बैंकानां नैव तालिका- ।

११ बैंकं राज्य - भण्डारः- राजकोषः प्रजाधनम्-
कराधानं च वणिजां राजकोषस्य कारणम्- ।

१२. अद्यारक्षणसंभूतः विप्लवः शान्तिमेष्यति ?
चातुर्वर्ण्यं निगदितं प्राच्यकाले मनीषिभिः- ।

१३. चतुश्शताधिकं प्रोक्तं मण्डलायोगपुस्तके-
चातुर्वर्ण्यं विवदति नैव कांक्षति चासनम्- ।

१४. मण्डलायोगजातीनां विवादः देशघातकः-
ब्राह्मणो ब्राह्मणं हन्यात् क्षत्रियश्चापि क्षत्रियम्- ।

१५. वणिजो वणिजं घ्नन्ति - शूल पाशास्त्र पाणयः-
कर्मकाराः शिल्पकाराः गुलिका दण्ड हस्तकाः ।

१६. अन्योऽन्यं प्रहरिष्यन्ति - लोह - तक्षक - नापिताः
पशूनां चर्म छेदः स्यात् द्विजातिवरजातिकै ।

१७. नाहरस्य शिरश्छेदः भविष्यति हिमाचले-
काश्मीरे पण्डितानां च रक्त सिक्तं धरातलम् ।

१८. सिक्खानां सिक्ख वर्गैश्च भविष्यति विनाशनम्
खालिस्तानं न लभते - पाकिस्तान विनश्यति- ।

१९. असंभेऽप्युग्रपन्थानां नाशनं संभविष्यति ।
कुत्रास्ति साम्यवादीनां राष्ट्रं विप्लववंचितम् ?

२०. कम्यूनानां विरचना कुत्रास्ति साम्य संगता ?
चीने संमर्दिताः छात्राः तत्रत्यैर्नरभक्षकैः- ।

२१. भारते लप्स्यते शान्ति दिल्ली स्थैः नररक्षकैः
दादा कामयते शान्तिं - भारते विप्लवोद्भवात् ।

प्रस्तुतिः— चक्रधारी शास्त्री साहित्याचार्यः
कल्पद्रुम सम्पादकः
नूरपुरम् कांगड़ा हि. प्र.

★

साहित्य सरिता:—

# न्याय दर्शनम्

(संस्कृतहिन्दीटीकाद्वयोपेतम्)

टीकाकार:— आचार्य श्री शालिग्राम:, दर्शनाचार्य: ।

प्रकाशक :— दार्शनिक — अनुसन्धानकेन्द्रम् —
ग्राम — डाक डैहण कोडरा, द्वारा लठियाणी,
जिला ऊना (हि. प्र.)

मूल्यम् ५०/०० रूप्यकाणि ।

यद्यपि न्यायदर्शनोपरि - अन्या अपि टीका: विद्वद्भिर्विहिता: परन्तु ता: प्रायेण काठिन्ययता सन्ति। यत्र च विषयकाठिन्यमस्ति तत्राधिक-कठिनता टीकाकारै: उत्पादिता । न च सर्वजनसुलभार्थप्रकाशनमकारि । श्रीआचार्यचरणानामध्ययनाध्यापनक्षेत्रे दीर्घतरानुभवोऽस्ति । न केवलमध्ययनाध्यापन एवापितु अधीतिबोधाचरणप्रचारणैर्दर्शनशास्त्रमधिगतमेभि: । इदमपि टीकाद्वयस्य वैशिष्ट्यमस्ति ।

संस्कृतटीकातिसरला । यत्र विद्यार्थिनोऽनया लाभान्विता: भविष्यन्ति तत्रैव रहस्योद्घाटनत्वाद्दर्शनशास्त्रस्य विदुषामपि परमाल्हादकरी सेत्स्यतीति नात्र कोऽपि सन्देह: । सहैव न केवलं संस्कृतज्ञा एवानया लाभान्विता: भवितुमर्हन्ति अपितु हिन्दीभाषाज्ञा अपि समानरूपेण लाभमस्य प्राप्स्यन्ति । यतोहि हिन्दीभाषायां श्रीआचार्यचरणैस्तथा न्यायदर्शनस्य विभिन्नरहस्यानां समुद्घाटनं कृतमस्ति येन साधारणजनोऽपि न्यायदर्शनस्य सम्यग्ज्ञानमधिगन्तुमर्हति ।

साधत्रयशतपृष्टसमीपमस्याकार: । एतदवलोक्य कम्प्यूटरमुद्रणयुतस्य पुस्तकस्य स्वल्पमेवेद मूल्यम् । आवरणमाकर्षकम् । प्राचीनदर्शनशास्त्रविद्वत्सु श्री शालिग्रामाचार्याणां प्रमुखं स्थानम् । भारते दर्शनस्य अंगुल्यग्रगण्या एव सन्ति विद्वांसस्तेषु च एषामपि नाम वर्तते । संस्कृतटीकां विलिख्य यत्र एभि: संस्कृतसाहित्यस्य समृद्धौ योगदानमकारि तत्रैव हिन्दीटीकानिर्माणेन न्यायदर्शनस्य ज्ञानमेभि: सर्वसुलभं कृतमस्ति ।

मन्ये छात्रा:, विद्वांस:, पुस्तकालयाध्यक्षा:, प्रकाशकाश्च सम्मानमस्य पुस्तकस्य पूर्णरूपेण करिष्यन्ति । — केशव शर्मा




## श्रीरणवीरकेन्द्रीयसंस्कृतविद्यापीठ संस्कृतदिवसः

जम्मूस्थोक्तविद्यापीठे संस्कृतदिवसो मानितोऽभूत् । श्री पूर्णचन्द्र शास्त्री-श्री रामलालनपाण्डेयाभ्यां वैदिकपौराणिकमंगलाचरणमकारि । प्राचार्येण सभ्यानां स्वागतं कृतम् । वन्दना – हिमांशुपाठकाभ्यां काव्यकोषा-ष्टाध्यायी पाठः कृतः प्रशंसितश्च विद्वद्भिः डा० राधाप्रसादचौधरी संस्कृताध्यापकान्—स्वशिशून् - संस्कृतपाठनाय समाह्वयत् । श्रावणीपर्वमाहात्म्य मूलराज्नारायणमिश्रादिविद्वद्भिः ख्यापितम् । रामलखनपाण्डेयादि-भिश्च विज्ञैः संस्कृतस्य महत्त्वं प्रतिपादितम् । अवसाने एका कविगोष्ठी आयोजिता । अत्र जम्मू विश्वविद्यालयस्य संस्कृतविभागाध्यक्षः डा. राम-प्रतापस्तथा च विद्यापीठप्राध्यापकः प्रियतमचन्द्रस्तथवान्ये विद्वांसः काव्यपाठ-मकार्षुः । "केन्द्रीय राज्य सर्वकाराभ्यां प्रथम कक्षातः दशमकक्षापर्यन्तं संस्कृतं स्वतन्त्ररूपेण एकोऽनिवार्यः विषयः स्वीकरणीयः" इत्यावश्यकः एकः प्रस्ता-वोऽप्यत्र सर्वकारसमक्षमुपस्थापितः । संयोजनं डा विश्वमूर्तिशास्त्रिभिः-अनुष्ठितं धन्यवादश्च डा. उमारमणमहोदयैर्विज्ञापितः ।

---

## चामुण्डाधाम्नि संस्कृतदिवसः

चामुण्डाधामे श्रावणीपर्वकाले वर्षेऽस्मिन् — समारोहोऽयं सम्पन्नः । अत्र प्रदेशस्यं विद्वद्भिः स्वीयनिबन्धाः पठिताः । कविगोष्ठी अपि-एकाऽत्र जाता । अस्यां प्रदेशस्य संस्कृत कविभिः मधुरा कविताः संस्कृते श्राविताः ।



## डा० वर्णेकरस्य सम्मानम्

श्रीधर भास्करवणकरः शिवराजोदयादीनामनेकसंस्कृतमौलिकग्रन्थानां लेखकाः सन्ति । नागपुरविश्वविद्यालये एते संस्कृतविभागाध्यक्षा आसन् । १२ अक्तूबर दिने 'वाङ्मणिः चूडामिश्र'—इति मानदोपाधिना काशीहिन्दू विश्वविद्यालयीये मालवीयभवने सम्मानिताः एते ।



# भवतां पत्राणि

सम्पादक महोदय !

सम्प्रत्येव प्राप्तेऽक्तूबरमासीयेऽङ्के श्रीमतां नरोत्तमदत्तशास्त्रिमहाभागानां "भूयशः शोचनीयं विचारणीयं च संस्कृतप्रेमिभिः" इति शीर्षकान्तर्गतो लेखः पठितः। लेखेऽस्मिन् शास्त्री महोदयैः काचन् रोषोद्भूताप्रापत्तयः प्रकटिताः सन्ति प्रथमा यथा संघेन मुख्यमन्त्रिमहोदयाय संस्कृते कथं न पत्रं प्रदत्तम्। श्रीशास्त्रिमहाभागा आयुषो वृद्धाः विद्यावृद्धास्तथा मादृशस्यादरणीयाश्रपि वर्तन्तेऽतोऽस्य जनस्य धृष्टतां क्षाम्यन्तु।

कस्यापि जनस्याग्रे तस्यां भाषायां वार्तालापः ज्ञापनादिप्रदानं वा, य तां भाषां सम्यक्तया बोद्धुं न शक्नोति, प्रथमतस्त्वरण्यरोदनमपरतश्च मूर्खताऽपि भवति। मान्येन मुख्यमन्त्रिणा यद्यपि संस्कृते शपथमग्राहि किन्त्वेतावता—एव सः संस्कृतस्य पण्डित. इति भावना निष्प्रयोजना; अन्यच्च सचिवादीनां प्रशासनस्याशेषां वाऽधिकारिणां व्यवहारः संस्कृते नैव प्रचलति ते तु संस्कृतं संस्कृतज्ञान् च महत्या द्वेषभावनयाऽवलोकयन्ति यदि संस्कृते ज्ञापनं प्रदत्तं स्यात्तर्हि तेन ज्ञापनेन नूनमेव व्यर्थकगजकरण्डशोभा विस्तारिता स्यात्।

अस्माकं संस्कृतज्ञानां स्वभावोऽयम चरात् वर्तते यद्यदि केचन राजनीतिज्ञाः संस्कृते शपथग्रहण कुर्वन्ति, संस्कृतोत्थानादिकस्य कस्मादपि मंचात् प्रलापं कुर्वन्ति यद्वा भारतीयसंस्कृतिसम्बन्धं संस्कृतेन घटयन्ति, तदा वय प्रफुल्लिताः भवामः भाटवत्तेषां स्तुतिं कर्तुं प्रस्तुता भवामः च। श्री शान्ताकुमारतः प्रागपि बहुभिः राजनीतिज्ञैः संस्कृते शपथग्रहणं कृतम्। संस्कृतोत्थानाय च नाल्पं प्रलपितम्, परिणामश्च भवतां समक्षे वर्तते।

श्री राधारमणदीनानाथाभ्यां यदि संस्कृतज्ञाभ्यामपि संस्कृते शपथं नाग्राहि तर्हि मम विचारानुसारं नात्र किमपि निन्दास्पदम्, किन्तु यदि संस्कृतज्ञाभ्यामपि संस्कृतस्य, संस्कृतज्ञानां च प्रदेशे स्थितिं व्यक्तिगतरूपेण जानतामपि यदि ताभ्यां सत्तायां विद्यमानाभ्यां संस्कृतज्ञान् प्रति च न्यायं न दापितं तर्हि नूनमेव तौ निन्दापात्रौ भविष्यतः

अस्माभिः पदत्ते ज्ञापने शोचनीयं न किमपि वर्तते, यतो हि २६ अप्रैल १९९० तिथौ मुख्यमन्त्रिणा सह सम्मेलनं पूर्वनिर्धारितकार्यक्रमा-

नुसारं केवलं वेतनादिविसंगतिविषयकमेवासीत् । ज्ञातमेव स्यात् श्रीमतां यत् प्रदेशे संस्कृतमहाविद्यालयानां का स्थिति: वर्तते । न्यायालयेन महाविद्यालयरूपेण स्वीकृताअपि शासनेन द्वेषवशात् पाठशालात्वमेवाहूयन्ते, नान्या च काऽपि सुविधा महाविद्यालयवत् प्रदीयते वय प्राध्यापककार्यं कुर्वाणोऽपि साधारणसस्कृताध्यापकवेतनमेव प्राप्नुम: । अन्याअपि बह्व्य: समस्या: मुखमुद्घाट्य स्थिता: सन्ति, याभि: संस्कृतसंस्थानां, संस्कृताध्येतृणां संस्कृताध्यापकानां च स्थिति: शोचनीयावस्थायां गन्तुं प्रवृत्ता वर्तते । तथापि संस्कृतस्य प्रचारप्रसारादिविषय: नास्माभि: विस्मारित: । वयं मौखिकरूपेण मुख्यमन्त्रीमहोदयेन साकमेतत् विषयकां वार्तां यांचां च कृतवन्त: ।

— लीलाधर वात्स्यायन:

महामन्त्री, हि. प्र. सं. म. वि. पि. संघ:

सुन्दरनगर (हि. प्र.)



## संस्कृत-धर्म-प्रचार यात्रा

अक्तूबर मासीय १७ दिनांकात्-२३ दिनांकं यावत् दिव्यज्योतिष: सम्पादकानां श्री केशव शर्मणां प्रवासोऽभूत । अस्मिन् प्रवासे सोलनमण्डलस्य कण्डाघाट निकटे भघाश ग्रामटिकायां श्रीमद्भागवतपारायणं तथा च प्रवचनमकुर्वन् । धर्मप्रसारप्रसङ्गेन संस्कृत प्रचारायापि बाहुल्येन प्रेरिता: सहस्रशो लोका: । अस्य आयोजनम् श्री कान्तिप्रकाश आचार्येण कृतम् । सप्ताहपर्यंतं देवर्षिपितृपूजनं वेदपाठमन्त्रजापादिकार्यक्रमाश्च प्रचलिता: । साप्ताहिकोऽयं यज्ञ: निर्विघ्नतया सम्पन्न: ।



## पाठका: प्रार्थ्यन्ते

मान्या: !

नववर्षारम्भो जात: नववर्ष शुल्क: प्रेष्य: । पत्रप्रेषणेनापि वार्षिकशुल्कप्रेषणार्थं प्रार्थना कृता किन्तु स्वल्पैरेव महानुभावै: शुल्कप्रेषणं कृतम् । अत: सविनयं प्रार्थ्यते यत् शीघ्रमेव शुल्कप्रेषणेन सहायता क्रियताम् ।

—— सम्पादक:



# राष्ट्रं धर्मसंस्कृतिसम्बद्धम्

धीरेन्द्र झा
सचिवः लोकभाषा-प्रचार
समिति, दरभगा केन्द्रम्



अस्माकं राष्ट्रं धर्मोपासनात् विश्वस्मिन्नपि विश्वे गौरवपूर्णपदमलभत। अस्य संसारस्य सर्वप्रथमोऽयं देशः यत्र प्रकृतितो निर्गता धर्माः सर्वान् जीवान् स्वतः एवानुशास्ति। धर्म विषयमधिकृत्य संस्कृत वाङ्मये मुख्यतो वेदे अनेकानि सुवचांसि प्रसिद्धतमानि सन्ति। तैत्तिरीयारण्यके धर्ममधिकृत्य श्रुतिरेषा प्रसिद्धा—

१ धर्मो विश्वस्य जगतः प्रतिष्ठा, धर्मिष्ठं प्रजा उपसर्पन्ति, धर्मेण पापमपनुदन्ति, धर्मे सर्वं प्रतिष्ठितम् तस्माद् धर्मं परमं वदन्ति इति। सर्वस्यापि जीवस्य सर्वस्मिन्नपि जगति प्रतिष्ठा बीजं धर्म एव वर्तते। अस्मिन् लोके धर्मवृद्धानां समीपं सर्वेऽपि सत्यासत्यविज्ञानाय गच्छन्ति। तत्र च श्रद्दधते। मनुष्यः सर्वविधकृतपापानां प्रायश्चित्तं चरित्वा पापमपनुदति। अतएव अस्मिन् जगति सर्वविधानां उपापानां मूलं धर्मो वर्तते। तस्मात् धर्मस्य सर्वतः उत्कृष्टता बहुभिराचार्यैः आदृता। अस्मिन्नेव प्रकरणे बृहदारण्यकोपनिषदि विलोक्यते "तच्छ्रेयोरूपमत्यसृजत धर्मम् तदेतत् क्षत्रस्य क्षत्रम् यद्धर्मस्तस्माद् धर्मात् परं नास्ति, अथोऽबलीयान् बलीयांसमाशंसते धर्मेण यथा राज्ञैवम्।

उद्दण्डस्य राज्ञो नियामकत्वात् विवदमानयोः पुरुषयोर्मध्ये दुर्बलस्यापि राज-साहाय्यवत् जयहेतुत्वात् च धर्मः पुरुषार्थे प्राथम्येन परिगणितः। धर्मनिर्णयाय सर्वोत्कृष्टप्रमाणरूपेण वेदस्यैव चर्चा जैमिन्यादिभिः मुनिभिः कृता।

तथा च तेनोक्तम्—"धर्म ब्राह्मणो वेदैकवेद्यः" इति। धर्मब्रह्मणोः सम्यग् ज्ञानाय वेदाध्ययनाध्यापनादिव्यवस्था सृष्टेरारम्भादेव यावदियं वसुन्धरा तिष्ठति तावच्चलिष्यति इत्येवाधिकृत्य पूर्वमीमांसाशास्त्रस्य प्रथमसूत्रत्वेन धर्मस्यैव विशिष्य चर्चा विद्यते। एतस्यैव सूत्रस्य व्याख्यानमधिकृत्य मीमांसकेन कृष्णयज्वना— २ वेदे बोधितेष्ट साधनताको धर्मः" यथा यागादि

---

१ तैत्तिरीयारण्यके १०-६३
२ मीमांसा परिभाषा

वेदबोधितानिष्ट साधनताकोऽधर्मः यथा कलंजभक्षणादिः । धर्मपदेन समग्र जीवकल्याण निमित्तता विज्ञायते । यथोक्तं मनुना— १ "धारणाद् धर्ममित्याहुः धर्मो धारयति प्रजाः यत् स्याद् धारणसंयुक्तः स तु धर्म इति स्मृतः ।"

सर्वेषां संस्काराणां यज्ञानुष्ठानानां च मूलं धर्म एव वर्तते । यत एतानि सर्वाण्यपि कर्माणि जनकल्याणकामनयैव ऋषिभिः प्रणीतानि वर्तन्ते । एतेन सर्वेऽपि राष्ट्रस्य अभ्युदयकामनया धर्मस्याश्रयत्वं श्रयन्ते । महर्षि याज्ञवल्क्येन धर्माणां दशमुख्यानि स्थानानि धर्माश्रयत्वेन प्रतिपादितानि । तेषां परिपालनेन धर्माणां सर्वेऽपि भागा प्रपूर्णाः जायन्ते । यथोक्तं तेन "धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः । धीर्विद्यासत्यमक्रोधो दशकं धर्म लक्षणम् ।" वैदिक सभ्यता संस्कृतेश्च पंचपदानि पतंजलिमुनिना प्रदर्शितानि पञ्च यमाः सन्ति । अत्र मनोरुक्तिः युक्तियुक्तेति मत्वा तद् वचनमुदाह्रियते— ३ "यमान् सेवेत सततं न नियमान् केवलं बुधः । यमान् पतत्यकुर्वाणो नियमान् केवलान् भजन् । अहिंसा सत्यमस्तेय ब्रह्मचर्यापरिग्रहाः एते पंच यमाः सन्ति ।" ये अन्तः करणं संयमयन्ति । एते नियमेभ्यः पूजा जप, पाठ तथाग्निहोत्रादिभ्यः श्रेष्ठाः सन्ति । एतेषां यमानां सेवा सर्वेष्वपि धर्मेषु समादृताः सन्ति । नियमास्तु धर्मभेदेः सर्वेषां भिन्ना भवन्ति । अतएव सभ्यता संस्कृतेः सार्वभौमिकता दृष्ट्या असाधारण सामर्थ्यप्रदाः सन्ति अस्माकं दृष्ट्या तु एकैकस्यापि यमस्य अहिंसादयस्य परिपालनं आपातत महद् दुष्करमिव वर्तते । समेषां परिपालनेन तु मनुष्याः देवताः संभवन्ति । मानवी सभ्यता संस्कृतिश्च दैवी सभ्यता संस्कृतिरूपा जायते । इयं च पृथिवी अनया सभ्यतया संस्कृत्या च स्वर्गमिव भवेत् । सभ्यता शब्दार्थ सभ्यैः समाहैः तायमाना विस्तीर्यमाणाः ये क्रियाकलापाः ता सभ्यतामापन्नाः संस्कारैः जनिताः व्यवहाराः संस्कृतिपदेन अध्यात्मिकोन्नतिवाचका भवन्ति । अस्माकं सभ्यतायाः संस्कृतेश्च कानिचित् विशिष्टानि सूत्राणि सन्ति यै संग्रथिताः भारतीयाः हिमालयं समारभ्य इन्दुसरोवरं [कन्याकुमारी] यावत् परस्परं सम्बद्धाः सन्ति अतएव वेदे — "तेन त्यक्तेन भुञ्जीथा ......... धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् ......... द्यौः पितापृथिवीमातेति ......... "संगच्छध्वं संवदध्वं संवोमनांसि जानताम् ......... वसुधैव कुटुम्बकमित्यादि अस्माकं सभ्यता-

१ मनुस्मृति २ याज्ञवल्क्य स्मृतौ
३ मनुस्मृतौ ४-२०४ ।

संस्कृते: मूलं सूत्रमासीत् । मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् । मनस्यन्यद् वचस्यन्यद् कर्मण्यन्यद् दुरात्मनाम् ।"

सम्पूर्वकात कृ धातो: क्तिनि भूषणार्थे सुटि च आगमे कृते संस्कृति शब्द: निष्पद्यते । यस्यायमर्थः पारलौकिकधार्मिकाध्यात्मिकार्थिकराजनैतिक-लौकिकाभ्युदयेन संवद्धानि मनबुद्धिग्रहंकारादिभि: चेष्ठितानि संस्कार सम्पन्नानि कर्माणि संस्कृतिपदेन व्यवहर्तव्यानि भवन्ति । संस्कार शब्दार्थ: मलापनयनेन गुणानामाधानं अवगम्यते । अर्थात अन्तर्बाह्यस्थितानि यानिकानिचित् अनपेक्षाणि हानिकराणि तत्वानि सन्निहितानि भवन्ति तेषामपसारण-पूर्वकं अतिशयेनेष्ट तत्त्वस्य संस्थापनमेव संस्कारा: । संस्कृति शब्द: शुक्लयजुर्वेदे वारमेकं मन्त्रमुखेन प्रतिपादितो विलोक्यते । 'सा प्रथमा संस्कृतिर्विश्ववारा" इत्यत्र संस्कृतिशब्दस्य व्याख्यानसन्दर्भे उव्वट महीधरयोः एषा सम्मति: सा प्रथमा मुख्या संस्कृति: सोम संस्कार: यस्येन्द्रस्य क्रियते इन्द्रार्थं क्रियते इत्यर्थं: सोम संस्कार: सोमक्रये क्रियते इति किं भूता: संस्कृति: विश्ववारा विश्वै: सर्वे ऋत्विग्भि: व्रियते तत्र सोम: सा विश्ववारा यद्वा विश्वं वृणोति क्रीयमाणा: सोम: यत्रेति विश्ववारा जगदुत्पत्ति बीजत्वात् सोमस्य वरुणो मित्र: अग्निश्च सप्रसिद्धो यस्य प्रथमो मुख्यो भृत्य इति । इत्यादिभि: मन्त्रप्रमाणवचनै: संस्कृतिपदम् यज्ञादिवाचकत्वे स्पष्टरूपेण अभिवर्णितं वर्तते । यद्धि संस्कारसम्पन्नतां अभिद्योतयति । संसारेऽस्मिन् सर्वेषां राष्ट्राणां कृते संस्कारस्य सर्वोपरि उपयोगिता वर्तते संस्कारविहीने सति राष्ट्रेषु विप्लवा: जायेरन् । राष्ट्राणि च विनाशयेरन् । तस्मात संस्कृते राष्ट्रेण असाधारणसम्बन्धो वर्तते । संस्कृतिसंरक्षणाय संस्कृते: जनक: यो हि संस्कार: तदुपरि किमपि विवेचनं आवश्यकमिव मत्वा क्रमश: यज्ञांगरूपतया आवश्यकतया संस्काराणां विवेचनं प्रस्तूयते । ते च संस्कारा: मुख्यरूपेण षोडश वर्तन्ते एतैरेव संस्कारै संस्कृता: सन्त: मानवा: संस्कृति-मन्तो भवन्ति । यत: चरकेणोक्तम् "संस्कारो हि गुणान्तराधानमुच्यते इति । मानवजन्मनि पितरौ असाधारणं कारणं भवत: । तयो: वंशानुक्रमेण ये सुरक्षिता: संस्कारा: भवन्ति ते शिशोवारक्षिता: सम्मिलितरूपेण भवन्ति । अपरश्च बालकस्य जन्मजन्मान्तरागता: संस्कारा: समायान्ति उभयो: संस्कारयो महान् संघर्ष: शिशोर्मनसि जायते तत् कुसंस्कारोन्मूलनाय सुसंस्कारसंवर्द्धनाय च गर्भाधानप्रभृति एकादश संस्कारा: उपनयनान्ता: अष्टवर्ष यावत् नैरन्तर्येण भवन्ति । एभि संस्कारै: गर्भदोषा:

दूरीक्रियन्ते । तदर्थमुक्तं मनुना—

१ "गार्भैहोमैर्जातकर्म चौलमौञ्जी निबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥"

अर्थात् गार्भिकाः—

कुसंस्काराः जातकर्मादिसंस्कारैः चूड़ाकरणोपनयनादिभिश्च विनष्टाः जायन्ते । शिशुः शरीरः सन् स्वस्थे शरीरे स्वस्थं मनः समुत्पद्यते इति वचनं परिपुष्टं जायते । षोडशसंस्काराणां सामाजिकस्वस्थतायै ऋषिभिः आविष्काराः कृताः तत्र प्रथमः संस्कारः गर्भाधान नामधेयः । संस्कारोऽयं क्षेत्रपरिष्काराय गर्भदोषापनयनाय च विभिन्नप्रकारकैः क्षेत्रसंस्कारोपयोगि श्वेतपुष्प्याः वफट् कारिकायाः मूलं उपदेशे पिष्ट्वा पत्न्याः नासिकायामासेचनं कुर्वन् कूर्मपित्तं चोपस्थे आधाय अनामिकया मन्थनं अनेकेषां रोगक्रमीणां गर्भविजातकानां विनाशाय भवति । अनेन संस्कारेण विना गर्भा सदोपद्रुताः शिशुरोगसहिताः प्रायशो भवन्ति । किन्तु अनेन संस्कारेण संस्कृतो गर्भः संस्कारसम्पन्नं निरूपद्रवं गर्भं कृत्वा बलवन्तं स्वस्थं शिशुं उत्पादयति । एतेन हि सुसंस्कृताः शिशवः समुत्पद्येरन् तदर्थं पत्नी मध्यमपिण्डं समन्त्रकं प्राश्नाति । "आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् । यथेह पुरुषोसत्" मन्त्रोऽप्यमुदात्तभावनामभिव्यक्ति द्वितीयः संस्कार पुंसवनम् । यथाह पारस्करः—

"पुंसवन संस्कारः तदा जायते यदा" द्व्यंगुलकं शरीरं रूपं अवतरति । शरीरं च शिशोः स्वस्थः सुन्दरश्च भवेत् एषा धारणा पित्रोर्मनसि तिष्ठति तदर्थं समन्त्रकं "आवीरो जायतां पुत्रस्ते दशमास्यः" इत्यनेन मन्त्रेण गर्भमभिमन्त्रयति जीवनस्य प्रवाहः प्रबलतरेण शक्तिमान् तिष्ठति तां शक्ति वशीकर्तुं विकासपथमानेतुं एष पित्रोः द्वितीयः प्रयासः ।

क्रमशः

---

१ मनुस्मृतौ—२-२७ ।

---

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ।

संस्कृतोत्सवोपलक्ष्ये—

# संस्कृतं भारतं नः पुनर्द्योतताम्

डा. उपेन्द्र–पाण्डेयः



साङ्गवेदाः समस्ताः पुराणानि वै
दर्शनं काव्यशास्त्रञ्च नानाविधम् ।
लोकसाहित्यमाभान्ति यत्संस्कृतौ
लोकतन्त्रात्मकं भारतं राजताम् ।

व्यासभासौ कवी कालिदासस्तथा
भारविर्माघहर्षाश्वघोषादयः ।
पद्य - गद्येषु निर्माय येषां यशो—
वर्णयन्तीत्यदो भारतं भासताम् ॥

संस्कृता यत्र वाणी मनः संस्कृतं
संस्कृता संस्कृतिर्जीवनं संस्कृतम् ।
संस्कृता राजनीतिः बलं संस्कृतं
संस्कृतं भारतं नः पुनर्द्योतताम् ॥

संस्कृते राष्ट्रसम्पत्तिरेव स्थिता
संस्कृते राष्ट्रनीतिश्च पारङ्गता ।
संस्कृते सर्वरत्नं हि देशे स्थितं
संस्कृतं राष्ट्रभाषा भुवि भ्राजताम् ॥

उग्रवादस्तथातंकवादोऽधुना
देशराज्ये सदाभारतं वर्धते ।
मन्त्रिवर्गो यथासन्दिरक्षेच्छुको
भारतीयं दलं भारतं सेव्यताम् ॥

— संस्कृत-प्रवक्ता
वनस्थली-विद्यापीठस्य



# ग द्य क लि के

— डा० लेखराम शर्मा

१. सम्बोधः

माता— पुत्र ? अद्य बहुहर्षायसे। किमर्थम् ?

पुत्रः— आम् ! निःसन्देहोऽस्मि प्रसन्नः।

माता परं कथं वत्स ?

पुत्रः— अद्यैकः बलिष्ठः छात्रः मया सम्यक् शिक्षितः।

माता— किं विहितं त्वया ? किं त्वया सः पीडितः।

पुत्रः— आम् मातः ? मूर्खस्योपायोऽपि कः।

माता— (क्षुब्धा भूत्वा) पुत्र ! त्वया सम्यङ् न विहितम्।

पुत्रः— न हि मातः सः मारं खादित्वा पश्चात्तप्तः मत्तः क्षमा॰ मयाचत्। पुनः कदापि पाठं न विस्मरिष्यति।

माता— नहि पुत्र त्वं शिक्षणं नावगच्छसि, काममाचार्योऽसि।

पुत्रः— प...प...प... रं आचार्यत्वनिर्वहणं मम परं कर्त्तव्यम्।

माता— (माधुर्येण बोधयति) कथन्न। कर्त्तव्यं तत् शरीरदण्डं विनाऽपि निर्वोढुं शक्यते। आचार्यत्वमाचरणात्सिध्यति। त्वया दण्डमाचरितं परं दण्डं नास्त्याचरणीयम्। अना-चाराच्च अनाचार्यत्वम्। अतोऽसि अनाचार्यः न तु आचार्यः। धृष्टछात्राणां पुरतः त्वया स्मृतः पाठः उदाह-रणरूपेण समुपस्थापितव्यः। तदेव आचरणम्। तदा तवानुचरणं शिष्याः अनुयास्यन्ति। दण्डं प्राप्य दृष्ट्वा च शिष्या अपि दण्डमाचरिष्यन्ति। एवं अनाचारः प्रसरति अतोऽनाचारं न सेवस्व। किमधिकम् अहं तु निरक्षरा वृद्धा। पुत्रकल्याणवशी भूता यत्किंचिदुक्तं न तत् अन्यथा मन्तव्यम्। तुभ्यम् यद्रोचेद् तत्कुरुष्व।

पुत्र :—(चरणौ स्पृष्ट्वा क्षमां याचते) अहं पुनः कदापि शिष्यान्न दण्डयिष्यामि अनया: शिक्षाप्रसादाग्रे तु काशीप्रवासोऽपि वृथाऽनुभूयते । सत्यमुक्तं :—

माता सहस्रं तु गौरवा' दिति ।

०—०

## २. किं बहुना ?

एकस्मिन् विशाले कुटुम्बे पुरोहितः आशीर्वादं पठति—"वंशो विस्तारतां यातु......" इति । यजमानः रूष्टो भवति । अलं बहुना । पुरोहितः अचिन्तयत् भविष्ये पूर्वं कुटुम्बमवलोक्यैव आशीर्वादमन्त्रः पठनीयः । यजमानः अबोधयत् यत् नात्र धनस्याल्पता परं पुनरपि बहुसन्तत्या कष्टम् । सर्वे पुत्राः परस्परं युध्यन्ति मद्यपानं च कुर्वन्ति । इदं श्रुत्वा एकोऽन्यः दम्पती: प्रसन्नावभवत् । वरं आवयोः सन्तानहीनत्वम् ।

एकः चिकित्साधिकारी कुटुम्बस्य वृद्धां अबोधयद् यत् सन्तानबाहुल्यं निकृष्टम् । पुत्राः परस्परं युध्यन्ति । पितरौ जीवन्तावेव नरक पश्यतः समक्षे विद्वान् पिता इदं श्रुत्वा अकथयत् —"तदा किम् ! युद्धमप्यस्माकं सांस्कृतिको निधिः, तद्भवितव्यम् ।" अधिकारी तूष्णीम् सञ्जातः वराकः ।

एका वृद्धा माताश्री परिवारकल्याणसेविकां उपदिशति—"सर्वे स्वीयं भाग्यं खादन्ति न कोऽपि कंचिद्ददाति ।" युवादम्पती श्रुत्वा शल्यविचारं स्थगितवन्तौ कानिचिद्वर्षाणि व्यतीतानि पत्नी प्रतिवर्षं सूते । कोलाहलं वर्धते । पितामही अद्यापि प्रसन्ना परं दम्पत्योः दशां दृष्ट्वैव निर्मीयते येन केन प्रकारेण यानं नयतः ।

एका पितामही पंचकन्याः यावत् प्रपौत्रं प्रतीक्षते । न सञ्जातः । षष्ठस्थानेऽभवत् शल्यमायोजितम् वर्षानन्तरं प्रपौत्रः दिवं गतः । सर्वे रुदन्ति, भाग्यं क्रोशन्ति, स्मरन्ति शुभचिन्तकानां वचनानि । चिकित्साधिकारी शोकं प्रकटयति पितामही रुदन्ती स्वीकरोति तस्य पूर्ववचनानामौचित्यम् । पुत्र्योऽपि पुत्रा भवन्ति ।

— गांव - घाला
पो० देवठी-१७३२११
सोलन (हि० प्र०)






शास्त्री ओम्प्रकाश 'राही'

न्यायप्राप्तिर्नरेण यदि न कृता,
लोकतन्त्रस्य मूल्यं विनष्टं तदा ।
स्वाधिकारस्य प्राप्तिर्यदि न भवेत्,
केवलं तन्त्रशब्दस्तदा शिष्यते ।

शासनस्य प्रणाली भवेत्का शुभा,
एतदर्थं विचारः- कृतः नेतृभिः ।
सर्वलोकाय भूयात् सदा मङ्गला,
समता सा जनैः लोकतन्त्रात्मिका ।
किन्तु देशेऽस्मदीये स्वतन्त्रेऽधुना,
स्वाधिकारं मनुष्यो कदा विन्दते ।
न्यायप्राप्तिर्नरेण — — १

ऋद्धवंशस्य सद्बालवर्गस्सदा,
उच्चसंस्थासु शिक्षारतो दृश्यते ।
यत्र निम्नस्य मध्यस्य वर्गस्य वा,
बालवर्गेण पादोऽपि न स्थाप्यते ।
भेदसंस्थापकेऽस्मिन् कथं शिक्षके,
भारते लोकतन्त्रन्नुसार्थं भवेत् ।
न्यायप्राप्तिर्नरेण — — ॥ २

अद्य देशे युवानः सुयोग्याः हि वै,
उच्चशिक्षाप्रमाणैस्तथा सङ्गताः ।
भृत्य - भावं ग्रहीतुं यतन्ते यदा,
सर्वकारस्य नीतिस्तदा बाधते ॥
वृद्धिभावन्नु जात तदारक्षणम्,
शिक्षितो येन वर्गोऽधुना पीड्यते ।
न्यायप्राप्तिर्नरेण — — ॥ ३

शान्तिसंस्थापको देश एषोऽधुना,
सर्वतः ज्वलयमानो दरीदृश्यते ।
किन्न पञ्चाम्ब्वासाम — प्रान्तद्वये
जायमाना स्थितिर्नेतृभिर्दृश्यते ? ॥
जम्मु—काश्मीर राज्ये बिहारे तथा,
शोचनीया दशा तैः कथं दृश्यते ।
न्यायप्राप्तिर्नरेण ... ... ॥ ४

सर्वधर्मस्य गोप्तैष देशोऽधुना,
धर्मविध्वंसकारी दरीदृश्यते ।
रामभूमेः सुताः भारतीयाः जनाः,
रामभूमिं न जानन्तिधिक ताञ्जनान् ॥
नेतृवर्गो रहस्यं विजानन्नपि,
(वोट) मत कोषस्य वृद्धौ रतो दृश्यते ।
न्यायप्राप्तिर्नरेण ... ... । ५

भ्रातृवर्गस्य रक्तस्य पानाय वै,
उद्यतस्तिष्ठति भ्रातृवर्गोऽधुना ।
शासकैः मूकभावे कथं स्थीयते,
वन्धुवर्गस्य नाशं विलोक्यापि हा !
बन्धुनाशे सति राष्ट्रमेतत्तदा,
नंक्ष्यतीदं स्वतन्त्रं पदं देशतः ॥
न्यायप्राप्तिर्नरेण ... ... ॥ ७

— रा० उ० वि० बोगधार
जिला-सिरमौर (हि. प्र.)

## नाद्महं नवनीतम् मातः | भगवद्दत्त मिश्रः "भूतिः"

चारयितुं मधुवनमनधेनु प्रेषितवती मां प्रातः । ★
प्रहरः चतुष्कमतीत्य विभ्रमन् सायं गृहमायातः ॥
बालोऽहं बाहू मेऽलम्बौ शिक्यं कथमिदमापम् ।
वक्त्रे वैरिसखाः विलिप्य दधि विदधति मिथ्यालापम् ॥
एतद्वचः प्रतीतिमुपगता जननि त्वं मति—सरले ।
तव हृदि भेदोऽल्पोऽजनि परतो जातमवेत्य तु तरले ॥
निज-कम्बलं लगुडौ गृहाण लघु बहु ननृते भववक्रे ।
तदा सूरदासो विहस्य सुतमुरसि यशोदा चक्रे ॥



## यमुनापारे संस्कृताध्यापनस्य निःशुल्कव्यवस्था

देहल्याम् यमुनापारे संस्कृताध्यापनस्य व्यवस्थाऽधुना यावन्नासीत् । अन्तर्राष्ट्रिय— आयुर्वेदसंस्थानविद्यापीठान्तर्गतमेषा व्यवस्था पं० श्रीजगदीश प्रसादशर्मणः प्रयासेन इदानीं कृताऽभूत् । अन्ताराष्ट्रियायुर्वेद संस्थानविद्या-पीठस्तु-इदानीं आयुर्वेदज्योतिष-कर्मकाण्ड - भैषज्यकल्पना— प्राकृतिकचिकि-त्सादीनां मुख्यप्रशिक्षणकेन्द्रोऽस्ति जातः । अत्र प्रवेशिकातः शास्त्री पर्यन्तं शिक्षा व्यवस्था वर्तते । प्रवेशेच्छुकाः संस्कृतमहाविद्यालयशाखाकार्यालय कृष्णा नगर दिल्ली ५१ इत्यत्र प्राचार्येण सम्पर्कं कर्तुमर्हन्ति ।



## मारिशसदेशे अन्ताराष्ट्रियसंस्कृताध्ययनकेन्द्रम

पं० श्री जगदीश प्रसाद शर्माणः मारिशसदेशे षष्ठे रामायण सम्मेलने भागग्रहणाय गता आसन् । एभिः सूच्यते यत् मारिशसदेशस्य पोर्टलुई नगरे संस्कृताध्ययनसंस्थानस्य व्यवस्था कृता वर्तते । अयं कथयति यत्—तत्रत्य-शिक्षामन्त्रिणा तथान्यमन्त्रिभिरपि एवं चान्यसंस्थाभिरस्य केन्द्रस्य वृद्धये सहयोगदानाय प्रतिज्ञातम् । यतोहि अफ्रीकाद्वीपीयानां कृते संस्कृतज्ञानस्य द्वार एषो भविष्यति । अस्योद्घाटन ७/८/९० काले (लखनऊ) (लक्ष्मण-पुरम्) नगरनिगमस्याध्यक्षेण श्री दाऊ जी गुप्तमहाभागेन कृतम् । स आह यद्भारते वैदिकयुगात्—यवनकाल यावदपि गुरुशिष्यपरम्परया गुरुकुल प्रणालिः प्राचलत् । भारतस्तु परतन्त्र एव तिष्ठेत्—इति विचारेण मैकालेऽस्याः परम्परायाः समूलोन्मूलनाय नवशिक्षां प्राचालयत् । तथापि सोऽपि एनां समाप्तां कर्तुं नाशकत् । भारते येन केन प्रकारेण समर्पिताः ऋषिकल्पाः विद्वांसः धर्म दर्शन - संस्कृतशिक्षाप्रदानेऽद्यापि संलग्नाः सन्ति ।



# १९८८ खीष्टाब्दीयसंस्कृतकृतयः पुरस्करिष्यन्ते

भोपाल: म. प्र. संस्कृतप्रकादमी संस्कृतकृतीनां कृते पुरस्कारान् प्रयच्छति । एते विविधपुरस्काराः १९८८ कृतीनां कृते दास्यन्ते । अत्र येषां रुचिः स्यात्तैः 'सचिवः- म. प्र. संस्कृत अकादमी चार बंगलारोड, सिविल लाइन भोपाल-४६२००२ इति संकेते त्वरया पत्रव्यवहारो विधेयः ।



# भोजसंगोष्ठी

१९९० खीष्टाब्दस्य सितम्बरमासे गोष्ठी मध्यप्रदेश संस्कृत - अकादमी द्वारा धारमण्डले समायोजिता । अस्योद्घाटनं इलाहाबाद वि. विद्यालयस्य संस्कृतविभागाध्यक्षेण डा. राजेन्द्रमिश्रेण कृतम् । असौ संस्कृतभाषां हिमालयवत् - देशेस्य सांस्कृतिकस्रोतसामक्षयकोषमकथयत् ।

अस्मिन् समारोहे मन्त्रिणः मण्डलाधीशादयः सर्वेऽपि भागं जगृहुः ।

भोजस्य साहित्यिकसांस्कृतिक - राजनयिकवैशिष्ट्यमत्र गम्भीरतया विद्वद्भिर्विवेचितम् । कविसम्मेलनमपि जातम् । प्रतिवर्षञ्चायं समारोहो मानितो भवेदित्यासीत - सर्वेषां मतम् ।



# अ० भा० कालिदाससमारोहः

उज्जयिनी अत्र ३० अक्तूबर दिवसे उक्तसमारोहो महता उत्साहेन मानितोऽभवत् । समारोहोऽयं सप्ताहं यावत् प्रचलति । अस्मिन् संस्कृतकविसम्मेलनम्, संस्कृतसंगीतसम्मेलनम्, संस्कृतनाट्य नृत्यसमारोहश्च भवन्ति । सहैव संस्कृतसम्बन्धिनो विषयाः गाम्भीर्येण विवेच्यन्ते । विशेषतः कालिदास साहित्यं विवेच्यते ।

म. म. राष्ट्रपति महाभागेनास्योद्घाटनमकारि । संस्कृतभाषा देशस्य एकतायाः एकं सुदृढतमसूत्रमस्ति - इति तेन प्रतिपादितम् ।



## सम्पूर्णानन्दस्मृतिग्रन्थप्रकाशनम्

सम्पूर्णानन्दसंस्कृतविश्वविद्यालय वाराणसी इत्यस्य संस्थापकस्य डा० श्री सम्पूर्णानन्दमहाभागस्य जन्मशताब्दीसमारोहावसरे विशिष्टस्मृतिग्रन्थ प्रकाशनमायोज्यते। विद्वद्भिः निम्नविषयसम्बद्धाः रचनास्त्वरया प्रेष्या।

१. तत्सम्बद्धानि संस्मरणानि
२. जीवनवृत्तानि
३. भारतीयदर्शनानि
४. भारतीयसंस्कृतिः
५. वैदिकसंस्कृतिः, आर्षेतिहासश्च
६. पुरातत्त्वम्, हिन्दुदेवानां पारिवारिकविकासश्च
७. अवधूतसम्प्रदायः
८. शैवागमः
९. प्राच्यविज्ञानम्, ज्योतिषम्, नक्षत्रविज्ञानञ्च
१०. विविध-'तकनीक'-सम्बन्धि-प्राच्यविज्ञानम्
११. संस्कृत शिक्षा
१२. संस्कृतसेवा (सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयसन्दर्भे)
१३. शिक्षासु नवप्रयोगाः
१४. हिन्दी-संस्कृत-पत्रकारिता
१५. स्वतन्त्रतान्दोलनम्
१६. भारतीयसङ्गीतम् (पूर्वीशैलीगतम्)
१७. समाजवादः
१८. साम्यवादः
१९. राजशास्त्रम्
२०. अष्टाङ्गयोगः (सैद्धान्तिकः प्रायोगिकश्च)

संयोजकः,
लक्ष्मीनारायण तिवारी
संकायाध्यक्ष श्रमण विद्यासंकाय,
स० संस्कृत वि. वि. वाराणसी-(उ० प्र०) २२१००२

---

## डा. विद्यानिवासमिश्राः सम्मानिताः

१९८२ खीष्टाब्दस्य प्रख्यातः 'मूर्तिदेवी पुरस्कारः' प्रा. श्री विद्यानिवास मिश्राय दीयते इति चयनसमित्याः समुद्घोषितम्। डा० विद्यानिवासः इदानीं सं० संस्कृत वि. वि. वाराणस्याः कुलपतिरस्ति। चयनसमित्याः-अध्यक्षः- डा० लक्ष्मीमल सिंघवी. सदस्याश्च सन्ति डा० अक्षयकुमार जैनः, डा० लोकेशचन्द्रः, डा० लक्ष्मीचन्द जैनः डा० स्वामिनाथन्, डा० दयाकृष्णश्च। मिश्रस्य या कृतिः सम्मानिता सास्ति—"महाभारतस्य काव्यार्थः"। पुरस्कारेऽस्मिन् ५१ सहस्रं दीयते।

——

# सम्पादकीयम्

## भारतस्य भारतीयानाञ्च रक्षाप्रश्नः

देशस्य वर्तमानदशामवलोक्य कस्य वा चिन्तनशीलजनस्य मनसि वेदना नोत्पद्यते, केन वा दुःखानुभवो न क्रियते को वा पीडितो न भवति कस्य मनसि च निराशा न समुदेति ? नेतारः परस्परं कामक्रोधलोभमोहईर्ष्याद्वेषादिभिः षड्शत्रुभिराक्रान्ताः कलहायमानाः सन्ति। प्रशासका अपि तेषामनुसरणे लग्नाः, निम्नाधिकारिणः, कर्मकराश्च कर्तव्यविमुखा वेतनग्रहणमात्रप्रयोजनेनाकृष्टाः सन्ति। युवकाः पथभ्रष्टाः, किं कर्तव्यविमूढाः स्त्रियश्च समानाधिकारं भृत्यादिप्राप्त्यर्थं कलहायमानाः, वालाश्चोपेक्षिताः सन्ति। गृहे गृहे ग्रामे ग्रामे, उपमण्डले, उपमण्डले, मण्डले, मण्डले, प्रदेशे, प्रदेशे घृणाद्वेषयोः साम्राज्यत्वात् परस्परं घोरकलहः। मार्गे मार्गे जाति - धर्म - सम्प्रदायराक्षसानां प्रभूतप्रवाहो द्रष्टुं शक्यते।

एतत्सर्वं यदपि देशेऽद्य सर्वत्र दृश्यतेऽस्माकं शास्त्रेषु, पुराणेषु रामायणे महाभारतेऽन्यत्र च संस्कृतसाहित्ये सर्वमपि पूर्णतो विनिन्दितं तथापि तत्सर्वं वयमनुपालयामः स्व शास्त्राणामाज्ञायाश्चावहेलनां कुर्मः। पत्रेषु, प्रचारमाध्यमेषु सर्वत्र दूरदर्शनप्रभृति सामान्यवीथिनाटकपर्यन्तम् वार्षिकात् दैनिकपत्र यावच्च नेतृणां, बुद्धिजीविनां प्रशासकानां वैज्ञानिकानां विशेषज्ञानांचात्र विभिन्नविचारा सन्ति।

अहन्तु स्वल्पमतिमान् लघुपत्रस्य सम्पादकोऽस्मि सीमिता मदीया शक्तिः परन्तु तदनुसारमपि सत्यमिदमस्ति यद्वयं भारतीयानां भारतस्य च सुरक्षायै यत् किमपि करणे लग्नास्तद् किल मूलरहितवृक्षस्य शाखासेचनमिव हास्यास्पदमस्ति। चिन्तनशीलाः विचारयन्तु।

भारतस्य भारतीयानाञ्च शुभचिन्तकैः सर्वप्रथमं स्वसंस्कृतिरक्षायै प्रयासा कार्या। प्रतिगृह भारतीया संस्कृतिः सुरक्षिता स्यात्। तस्या रक्षा संस्कारैर्विना न कथमपि भवितुमर्हति। भारतस्य स्वतन्त्रतायाः पश्चात् - संस्काराणां प्रायेण लोप एव जायमानो दृश्यते परिणामतः संस्कारहीनाः जनाः प्रायेणाभारतीया जायन्ते जात्याः केऽपि ते स्युः। येऽपि दोषा अद्य लोकेषु दृष्यन्ते ते किल संस्कारहीनेषु - एवोत्पद्यन्ते। भ्रष्टाचारानाचार - व्यभिचारादयो दोषाः संस्कारहीनेषु प्रायेण जनि लभन्ते। संस्काराः सन्ति संस्कृताधीनाः। न भारतीयैः हृदयेन स्वीक्रियते यत्संस्कृतभाषा अस्माकं संस्कारभाषा संस्कृतिभाषा च वर्तते। यावद्वयं संस्कृतस्य रक्षां न करिष्यामो ऽस्माकीना संस्कारश्रृंखला त्रुटिता स्फुटिता च भविष्यति। तेन भारतीयानां भारतस्य च हानिरेव भविष्यति अत मूलरूपस्य रक्षाकरणमावश्यकमस्ति; मदीया प्रार्थना वर्तते यत् सर्वेऽपि भारतीयतायाः पक्षपातिनः जनगणनासमये संस्कृतं प्रथमभाषात्वेन लेखयन्तु। भाषाया अस्याः प्रसाराय प्रचाराय च प्रयासाः विधेयाः। केन्द्रीयप्रशासनं प्रान्तीयप्रशासनानि च संस्कृतभाषायाः शिक्षाक्रमे संस्थापनाय प्रेरणीयानि विवशी करणीयानि च।

— केशव शर्मा

R. N. 6384/57 ल—33/एस. एम. / 10/89

# संस्थान के प्रकाशन



१. फलादेश कल्पतरुः (मूल संस्कृत में)
हिन्दी अंग्रेजी टीका सहित ४० वर्ष के अनुसन्धान और अनुभव पर आधारित जातकफल कहने का अनुपम ग्रन्थ ... — मू. ७०-००

२. संस्कृत कोशवाङ्मयम् (संस्कृत में)
संस्कृतकोशसाहित्यपर अनुसन्धानपूर्ण विवेचन ... ... मू. १७५-०

३. झञ्झा (संस्कृत में)
शेक्सपीयर के द टैम्पेस्ट नाटक का सचित्र रूपान्तर ... मू. ५०-००

४. हिमाचलप्रदेशे संस्कृतस्य प्रसारो विकासश्च (संस्कृत में)
हिमाचल में संस्कृत के प्रसार विकास की विस्तृत कहानी ... मू. ५०-००

५. वैजयन्ती (हिन्दी काव्य)
नवीन प्राचीन विचारधाराओं का गीतिमय समन्वय — मू. १५-००

६. सूनृता (संस्कृत काव्य)
आधुनिक गीतों में गुम्फित अनुपम उपहार — ... मू. २५-००

७. शक्तिसौरभ (हिन्दी में)
संस्कृत लेखिकाओं का इतिहास ... — ... मू. १५-००

८. विचारामृत (हिन्दी में)
आचार्य जी के विभिन्न विषयों पर जीवनोपयोगी लेख दो भाग — मू. १५-००

९. पथ्यापथ्यविनिर्णय
सं. हि. टीका सहित आयुर्वेद का दुर्लभ ग्रन्थ ... ... मू. २०-००
( डाकव्यय सर्वत्र पृथक् )

सम्पर्क सूत्र :—

सचिव,

**संस्कृत शोध संस्थान**

भारती विहार मशोबरा

शिमला १७१००७ (हि. प्र.)





# विषयानुक्रमः



# दिव्यज्योतिः

हि० क० सं०भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकागतमुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति ।

**हिमाचल प्रदेश—पंजाब-हरियाणा-जम्मूकश्मीर - मध्य प्रदेश—राजस्थान—महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।**

## पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरससुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकल कलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्ग्लमानेन) प्रकाशितं भवति

पत्रस्य वार्षिक मूल्य ३५ रु० अर्धवार्षिकं १८ रु० एकस्याङ्कस्य च रु० २-५० भवति ।

वर्षारम्भः अक्तूबर—मासतः भवति । ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति ।

ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोबरा, शिमला-१७१००७ हि० प्र०" इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

## परिचयः


संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, — दूरभाषः 78459

राष्ट्रपतिसम्मानिताः

प्रधानसम्पादकः— आचार्य केशव शर्मा एम. ए., एम, फिल, साहित्यरत्नम् – ,, 8 200

दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-७ (हि. प्र )

मुद्रकः प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि. प्र,)

स्वामी:- श्रीमती आचार्य रत्नकुमारी शर्मा

गताङ्कादग्रे

# राष्ट्रं धर्मसंस्कृतिसम्बद्धम्

धीरेन्द्र झा
सचिवः लोकभाषा-प्रचार
समिति, दरभंगा केन्द्रम्



तृतीयः संस्कारः सीमन्तोन्नयनम् । तदाह पारस्करः—

यदा शिशोः मस्तिष्कं निर्माणाय उदरप्रयोगगृहं सक्रियं भवति तदायं संस्कारः सम्पद्यते । संस्कारेऽस्मिन् मातुः केशाः विविधतैलाभ्यंजनेन सज्जीक्रियन्ते । सज्जीकरणसमये मस्तिष्कस्य ध्यानाय नारीभिः प्रेर्यते । तत्सम्मुखं घृतपूर्णा काचित् कटोरिका तिष्ठति । तां द्रष्टुं प्रेष्यते पृच्छयते च किं पश्यसि तदा सो ब्रवीति "प्रजां पश्यामि" पुत्ररूपाम् । तदारम्य वत्सजन्मपर्यन्तं निरन्तरं गर्भस्य साकांक्षतया सा ध्यानं रक्षति । यतोऽयमेक गर्भस्थः शिशुः कदाचित् समस्तस्य जगतः उन्नायको भविता युगद्रष्टा च संभवति । गर्भस्थ शिशोः एते त्रयः संस्काराः गर्भरक्षारूपाः भवन्ति । समुत्पन्ने च शिशौ प्रथमसंस्काररूपेण संस्कारोऽयं जातकर्मेतिनाम्ना व्यवह्रियते । जाते शिशौ स्वर्णशलाकया मधुसिक्तेन "ओमिति" देवीं गायत्रीं जिह्वायां लिखति । ततः । गर्गे 'वेदोऽसीति" जयति । तदनन्तरं -अस्मा भव पशुर्भव हिरण्यमश्रुतं भव । आत्मा वै पुत्र नामासि सजीव शरदः शतम्" पिता अङ्के आधाय मन्त्रमिमं प्रजपति । अयमपि मन्त्रः नितान्तं भावपूर्णः । शरीरेण मनसा वाचा शिशुः समग्रजीवनं ससुखं जीवितुं शतायुर्भवितुं च लब्धाशीर्वचनः सभ्यः सन् समाजं प्रगतिपथं नयति । ततः द्वितीयसंस्काररूपेण नामकरणसंस्कारः क्रियते । तदुक्तं मनुना—

"नामधेयं दशम्यां तु द्वादश्यां वास्य कारयेत् ।१
पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते ॥"

———

१. अथर्व संहिता ६-६८-३-

अर्थात् दशम्यां द्वादश्यां वा तिथौ पुण्ये तिथौ मुहूर्ते च युक्ते द्व्यक्षरं वा पिता नामकुर्यात्। इदं नामकरणं शिशोः समग्रनिर्माणबीजं वर्तते। तस्मात् यथा सर्वे. आदरेण नाम गृह्येत तथा नामकरणं-कुर्यात्। अथ निष्क्रमणम्।—

चतुर्थे मासि कर्त्तव्यं शिशो निष्क्रमणं गृहात्। १
षष्ठेऽन्नप्राशनं मासि यद्वेष्टं मंगलं कुलो ॥
चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात् ॥

एते संस्काराः निष्क्रमणान्नप्राशनचूडाकरणकर्णवेधाः शिशोः शारीरिक मानसिकविकासाय नैरन्तर्येण अनिवार्यरूपेणानुष्ठापितव्याः।

तत्र अथर्ववेदे चूडाकरणप्रसंगे अनेके मन्त्राः विद्यन्ते तेषु केचन लिख्यन्ते। आयमगन्सविता क्षुरेणोष्णेन वाय उदकेनेहि। आदित्या रुद्रा वसवः उन्दन्तु सचेतमः सोमस्य राज्ञो वयत प्रचेतमः।

अदितिः श्मश्रुवप्त्वाप उन्दन्तु वर्चसा २ य चिकित्सतु प्रजापति-र्दीर्घायुत्वायचक्षते। येनावपत् सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान्। ३

तेन ब्राह्मणो वपतेदमस्य गोमानश्ववानयमस्तु प्रजावान्। येन संस्कारसम्पन्नोऽयं शिशुः उपनयनसमये गुरोराश्रमे गन्तुं योग्यो भूयात्। एते च संस्काराः शिशोः जन्मप्रभृति चतुर्वर्षं यावत् अनिवार्यत्वेन कर्त्तव्याः।

उपनयनवेदारम्भसंस्कारो-पंचमे वर्षे शिशोः लब्धे प्रवेशे सति वर्णानुक्रमेण (जात्यनुरूपं) अस्य संस्कारस्यावश्यकता वरीवर्ति। यथोक्तं मनुना—

"ब्रह्मवर्चस कामस्य कार्यं विप्रस्य पंचमे। ४
राज्ञो बलार्थिनः षष्ठे वैश्यस्येहार्थिनोऽष्टमे।"

अयं च समयः उपनयनस्य सकामो वर्तते। अन्यथा तु—

———

१. अथर्वसंहिता ६-६८-३-२
२. अथर्व संहिता ६-६८-३-३
३. मनुस्मृतौ —२-३०
४. मनुस्मृतौ=२-३४-३५

" १ गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः ।।"

संस्काराविमौ त्रैवर्णिकेभ्यः अनिवार्यौ वर्तेते । अयमेव संस्कारः नितान्तमावश्यकः । यतोऽयमवसरः प्रथमाश्रमप्रवेशाय स्वगृहाद् बहिः सामाजिकैः बहुभिः पितृकुलं विहाय गुरुकुले द्वादशवर्षनिवासाय चावश्यकं वर्तते । अस्मिन् संसारे द्विविधं जन्म लभ्यते । एकं पित्रोः सकाशात् अपरं च गुरोः सकाशात् तस्मादुक्तं पतञ्जलिना—

"वंशो द्विधा" विद्यया जन्मना च । अथर्ववेदे अस्मिन्नेव संदर्भे मन्त्रोऽयं उक्तः—

"आचार्य २ उपनयमानो ब्रह्मचारिणं वृणुते गर्भमन्तः ।
तं रात्रीस्तिस्र उदरे बिभर्ति संजातं द्रष्टमभि सयन्ति देवा ।।
आचार्यस्तुतत्र नभसो उभे इये उर्वी गम्भीरे पृथिवीं दिवं च ।।
ते रक्षसि तपसा ब्रह्मचारी तस्मिन् देवा समनसो भवन्ति ।।
आचार्यो ३ ब्रह्मचारी ब्रह्मचारी प्रजापतिः ।
प्रजापतिर्विराजते विराडिन्द्रोऽभवद्वशी ।।
ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति ।
आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ।
ब्रह्मचर्येण तपसा देवामृत्युमुपाघ्नत ।।
इन्द्रो ह ब्रह्मचर्येण देवेभ्यः स्वराभरत ।।

एभि मन्त्रप्रमाणवचनैः इदं सुसिद्धं भवति यदनेन संस्कारेण विना मानवाः दानवत्वमापन्नाः संभवन्ति संस्कारेण युक्ताः अमृतायमानाः देवायत्ती कृताः इदं सर्वमपि जगत् परिपालयितुं पर्याप्ताः भवन्ति । अस्मिन्नेव समग्रो देशः समग्रमपि जीवनं सुसज्जितं भवति । अतएव सर्वे पुरुषार्थाः करामलकवद् भासन्ते ।

---

१. मनुस्मृतौ—२-३५ एव ३७
२. अथर्व संहिता—११-५-३
३. अथर्व संहिता—११-५-८
४. अथर्वः सं० ११-५-१६
५. अथर्व सं०=११-५-११

घृत १ कुल्या: पितृनस्य स्वधाभिवहन्ति यः स्वाध्यायमधीते तस्मात् स्वाध्यायोऽध्येतव्य:" इति ब्राह्मणवचनमिदं ऐहिकपारलौकिकं च जीवनं प्रवाहमयं नयति। अतएवोक्तं मनुना—

य:२ स्वाध्यायमधीतेऽब्दं विधिना नियत: शुचि: ।
तस्य नित्यं क्षरत्येष पयो दधि घृतं मधु ॥

द्वितीयाश्रमप्रवेशाय गुरोराश्रमान्निवृति: आर्षऋणमपाकरणाय यथावश्यकं भवति तथा पितृऋण आचार्य ऋणाभ्याम् उपायत्वेन द्वितीयाश्रमप्रवेश: अत्यन्तमावश्यकं भवति। अतएवोक्तं मनुना—

"चतुर्थमायुषो ३ भागमुषित्वाद्यं गुरो द्विज: ।
द्वितीयमायुषो भागं कृतदारो गृहे वसेत् ।"

इत्येतेन श्लोकेन पंचाशद् वर्षपर्यन्तं गृहस्थाश्रमवासाय धर्मार्थकामानां विवाह संस्कारं कृत्वा पुत्रमुत्पाद्य अर्थसंचये धर्मसंचये च प्रयत्नपूर्वक: प्रयास: कर्तव्यो भवति। विवाहात् पूर्वं कन्याया: लक्षण लक्षिता: गुणा: दृष्टव्या भवन्ति। येन गृहस्थाश्रमलक्ष्यं सम्यकतया सिद्धयति। तदर्थमुक्तं मनुना—

'अव्यङ्गाङ्गीं ४ सौम्यनाम्नीं हंसवारणगामिनीम् ।
तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत्स्त्रियम् ॥"

तत: परं येन गृहस्थाश्रमे अशनवसन आवासादय: देवकर्म पितृकर्मादयश्च समयकृतया निर्वहेत् तदर्थं उचितधनसंचयमपि शोभनेन यथा औचित्यं भजतें तथा अर्जनीयम्। अस्मिन्नेव प्रसंगे केनापि बुधवरेणोक्तम्-

'प्रथमे नार्जिता विद्या द्वितीयेनार्जितं धनम् ।
तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति ॥'

अस्माकं भारतीयानां राष्ट्रसमृद्धिधर्मसंस्कृतिसभ्यतानां च एते एव संस्कारा: चतुर्वर्गसाधका: मनुष्याणां परमकर्तव्यत्वेनोपासनीया: सन्ति। धर्मस्य संस्कृतेश्च लोपे सति सर्वमेव लुप्तं भवति। धर्म संस्कृत्यो: परिपालनेन तदनुष्ठानेन च सर्वेऽपि राज्ञ: प्रजाश्च सुख समृद्ध्यनुभवन्त: अन्ते च मोक्षमाप्नुवन्ति।

— बावनबीघा, लक्ष्मीसागर दरभंगा (बिहार)

---

१. अथर्ववेद संहितायाम्—११-५-१६
२. मनु० २-१०७
३. मनुस्मृतौ=४-१
४. मनुस्मृतौ ३-१०



# प्रमुखशुल्वसूत्रेषु कुण्डमण्डपविधिः

## प्रथमोऽध्यायः

### शुल्वसूत्राणां स्वरूपम्

सृष्टेः रहस्यमय्याः प्रक्रियायाः प्रकर्षरूपेण व्याख्यानं, वेदविद्यायामभूत् । तासां वेदविद्यानामपरिमितविस्तरोऽस्ति । यथैव सृष्टिरनन्ता तथैव वेदविद्याप्यनन्ता विद्यते अणुविराडोः क्षेत्रयोर्नास्ति काचिदपीयत्ता । तथैव प्रत्यक्षदर्शिभि र्ऋषिभिरपि प्रत्यपादि, यद् –

"अणोरणीयान्महतो महीयानात्मस्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुः पश्यति वीतशोको, धातुप्रसादान्महिमानमात्मनः ।।"१

अनयोरुभयोर्मूलमेकमेवास्ति । तच्चानन्तमव्यक्तमक्षरतत्त्वमेव । तादृशानां वेदानां व्याख्यानार्थं ब्राह्मणारण्यकोपनिषदो वेदाङ्गानि च प्रवृत्तानि । यतोहि बुद्धेर्ह्रासक्रमः प्रारम्भादेवाचलत् । यस्मात्साक्षात्कृतधर्मणामृषीणां यथोपदिष्टा विद्या, यदा पश्चवर्तिनामविज्ञाता जाता, तदोपदेशा प्रचलिताः । तेभ्योऽपि ग्लपितेभ्यरिमान्ग्रन्थान्षडङ्गरूपानरचयन् । २ वेदाङ्गसाहित्ये ज्योतिषाङ्गं हित्वा प्रायः सर्वाण्यङ्गानि सूत्रशैल्याऽऽरचितानि । कुत्रचिद्प्रातिशाख्यादिषु सम्मिश्रणमपि दृश्यते । वेदब्राह्मणयो मुखरूपं व्याकरणम्, ज्योतिषं नेत्ररूपम्, छन्दः पादद्वयम् निरुक्तं श्रोत्ररूपम्, शिक्षा च घ्राणस्थानीया वर्तते, तथैव कल्पो हस्तरूप आस्थीयते ।३ यथा कर्ता करणेनैव स्वकार्यं

---

१. कठोपनिषदि १-१-२०

२. साक्षात्कृतधर्माणो ऋषयो बभूवुः । तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्सम्प्रादुः । उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषु वेदञ्च वेदाङ्गानि च । निरुक्ते १-६ ।

३. छन्दः पादौ तु वेदस्य, हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ।।
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम् ।
तस्मात्साङ्गमधीत्यैव ब्रह्मलोके महीयते ।। पाणिनीयशिक्षायाम् ४१-४२

सम्पादयितुं प्रभवति तथैव समस्तक्रियानिवर्तनाय समस्तशरीरे करण-स्थानीयौ हस्तौ भवतः।४ तावेव समस्तकर्मविधिनिर्धारणाय सर्वदाग्रे भवतः। तदेव हस्तनाम तयोः।५ एवमेव यज्ञकर्मविधिनिर्धारणाय वेदाङ्गेषु कल्पः प्रमुखो वर्तते। कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति।६ सायणः।

वैदिकवाङ्मयस्य सम्यग्विकासे कल्पसूत्राणां महत्वपूर्णं स्थानं वर्तते। कल्पसूत्रशब्दस्य सांयोगिकी निष्पत्तिः। तत्र कल्पानां वेदविहितानां कर्मणामानुपूर्व्येण कल्पनाशास्त्रम्। अर्थात् गर्भाधानादारभ्यौर्ध्वदैहिकसंस्कारान्तानां षोडशसंस्काराणान्तथा यज्ञयागादिविधीनां क्रमशः सविधिकवर्णनकर्तॄणां सूत्रग्रन्थानां कल्प इति नाम। "अल्पाक्षरत्वे सति बह्वर्थबोधकत्वं सूत्रत्वम्" इति सूत्रशब्दस्यार्थः प्रदर्शितः। अतो यत्र संक्षेपरूपेण कथ्यस्य कथनम्भवेत्, तत्र सूत्रत्वङ्घटते। अतो यज्ञयागादिनियमानां संक्षेपेण कथनमिति कल्पसूत्राणामर्थः।७ कल्पसूत्रेषु समग्रधार्मिकनियमानां यज्ञविधाननियमानां संक्षेपतया व्यवस्थितरूपेण च प्रतिपादनमस्ति। एषामाभिमुख्येन चत्वारो विभागा भवन्तिः— श्रौतसूत्राणि, गृह्यसूत्राणि, धर्मसूत्राणि, शुल्वसूत्राणि च। यथा बोधायनशुल्बसूत्रस्य प्रस्ताविके भागीरथप्रसादत्रिपाठी वागीशोऽप्याहः—

"श्रौतगृह्यधर्म-शुल्बाख्यानि चतुर्विधानि सन्ति कल्पसूत्राणि प्रतिवेदं प्रसिद्धानि" इति।८

तत्र शुल्वसूत्राणि श्रौतसूत्राऽन्तर्गतानि समाम्नायन्ते। शुल्बं नाम यज्ञकर्मणि कुण्डनिर्माणप्रसङ्गे, मानार्थमुपयुज्यमाना रज्जुः। शुल्वम्—

---

४. पाणिनिः, अष्टाध्याय्याम् २-४-४२ साधकतमम् करणम्।

५. निरुक्ते १, ३, १, हस्तः कस्मात् प्राशुहनने।

६. ऋग्वेदभाष्यभूमिकायाम् पृ. ९८ (सायणे)

७. अल्पाक्षरमसंदिग्धं सारवद्विश्वतोमुखम्।
महाभाष्यभूमिकायाम् पृ. २५
अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः॥

८. बोधायनशुल्बसूत्रस्य प्रस्ताविके पृ. १

रज्जुमानादिना कृतमिदङ्क्षेत्रगणितमुच्यते। शुल्वसूत्रेषु रज्जुभिः कृतमानानां वेदिकानां कुण्डानां यज्ञस्थानानाञ्च वैशिष्ट्येन प्रतिपादनमस्ति। केन विधिना वेदिकानान्निर्माणम्भवेदिदमपि तत्रैव प्रतिपादितमस्ति। तस्माद् भारतीयरेखागणितस्य प्राचीनतमानि ग्रन्थरत्नानि सूत्राणीमानि। यदि कश्चिद्रेखागणितस्येतिहासमधीयीत, तर्हि शुल्वसूत्रग्रन्था अवश्यमेवाध्येतव्याः। हेमचन्द्रानुसारेण शुल्वशब्दः "ताम्रे यज्ञकर्मण्याचारे जलसन्निधौ" इति चतुर्ष्वर्थेषु प्रयुक्तः ९ तत्रास्योत्पत्तिविषये यदा विचार्यते तदा द्विधाऽस्य निष्पत्तिः गत्यर्थक शल्धातोः रूल्वादयश्चेति सूत्रेण शुल्वशब्दस्ताम्रार्थको निपात्यते। १० प्राकृतभाषायां "सुव्व" इति शुल्वार्थकः शब्दो हेमचन्द्रदर्शितार्थेषु प्रयुज्यते। तत्रापि रज्ज्वर्थको बाहुल्येनास्य प्रयोगः। तत्र प्रादेशिकभाषास्वयं "सूब" "सूब्बा" "चुब्ब" "सुब्बी" इत्यादि बह्वीष्वाकृतिषु व्यवह्रियमाणः श्रूयते। अस्य रज्ज्वर्थकस्य निष्पादनन्तु शुल्व मान इति। ११ चौरादिकधातोरच् प्रत्ययं विधाय, भवत्येव सर्वेषां वेदानां शुल्वसूत्राणि वर्तमाने समये नोपलभ्यन्ते केवलं यजुर्वेदस्यैव षट्शुल्बसूत्राणामुपलब्धिर्जायते।

वेदेषु यद्यप्यध्ययनपारायणब्रह्मयज्ञजपादावृग्वेदस्यैव प्राथम्यं वर्तते। १२ तथाप्यर्थज्ञानस्य तु यज्ञानुष्ठानार्थत्वात्, तत्र तु यजुर्वेदस्यैव प्रधानत्वादित्यनेन सायणोऽपि प्रायोगिककर्माणि तथा व्याख्यानादौ यजुर्वेदस्यैवाभिमुख्यत्वम्मनुते तथा ऋग्वेदोऽप्यस्य प्राभिमुख्यं स्वीकरोति। १३ तादृशोऽयं प्रायोगिको यजुर्वेदो द्विधा विभज्यते सम्प्रदायभेदात्। ब्राह्मसम्प्रदाय आदित्यसम्प्रदायश्च। ब्राह्मसम्प्रदायप्रतिनिधिर्यजुर्वेदः कृष्णयजुर्वेदनाम्नाम्नायते। आदिसम्प्रदायस्य प्रतिनिधित्वं शुक्लयजुर्वेदो भजते। तस्य शुक्लत्वस्य च भेदस्तस्य स्वरूपमवलम्बते। दर्शपौर्णमासा-

---

९. संस्कृतशब्दार्थकौस्तुभे पृ. १११९, शुल्बः-अच्, डोरी, ताम्बा, यज्ञीयकर्म जल का सामीप्य या वह स्थान जो जल के समीप हो।

१०. पाणिन्युणादिगणे ४-८५

११. सिद्धान्तकौमुदीचुरादिगणे वा. १६११

१२. सायणीय ऋग्वेदभाष्यभूमिकायाम्—पृ. ४

१३. यज्ञस्य मात्रां विमिमीत उत्वः ॥ ऋग्वेदे १०-७१-११

दियज्ञानुष्ठानानां ये आवश्यका मन्त्राः सन्ति, तेषां शुक्लयजुर्वेदे सङ्ग्रहो वर्तते। तत्र केवलानामेव मन्त्राणामुपलब्धिरस्य शुक्लत्वमस्ति। तदैव शतपथब्राह्मणेऽप्याहः—"आदित्यानीमानि शुक्लानि यजूंषि वाजसनेयेन याज्ञवल्क्येनाव्याख्यायन्ते" इति। १४ गुरुशापशप्तो याज्ञवल्क्यो वमनं कृत्वा वैशम्पायनेनाध्यापितो यजुर्वेदो गुरवे प्रत्यावर्तयत। पुनः सूर्याराधनं विधाय मध्यन्दिने, तस्मात्पुनः शुक्लयजुर्वेदं प्राप्नोत्। १५ अत एव शुक्लयजुर्वेदो वाजसनेयशाखया सम्बद्धः। तस्यैव नाम माध्यन्दिनोऽपि वर्तते। अस्याः शाखायाः कात्यायनशुल्वसूत्रमस्ति। साम्प्रतञ्चोपलब्धमपि वर्तते। कृष्णयजुर्वेदस्तैतिरीयशाखया सम्बद्धोऽस्ति। यस्य बौधायनापस्तम्ब-मानव-मैत्रायण-वाराहशुल्वसूत्राणि सन्ति। बाधूलशुल्वसूत्रमपि साम्प्रतंलभ्यते। परन्तु मशकशुल्वसूत्रं हिरण्यकेशिशुल्वसूत्रञ्चेदानीन्नाधिगम्येते। एत आपस्तम्बशुल्वसूत्रस्य करविन्दस्वामिभाष्य उल्लिख्येते। यज्ञानां यथासमये सम्पादनाय, यथार्थैः ज्योतिशास्त्रस्याविर्भावो विहित.. उपबृंहितश्च। तथैव यज्ञवेदीनामाकारस्वरूपयोर्निर्धारणाय, प्राचीनभारते सम्यगधीते ज्यामितिबीजगणितञ्च। शुल्वसूत्राणामध्ययनेन सम्पूर्णप्राचीनज्यामितिशास्त्रस्य ज्ञानञ्जायते।

---

१४. शतपथब्राह्मणे १४ ६-५-३३

१५. भागवतपुराणे १० ६-६१-७४

❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋

## पाठकाः प्रार्थ्यन्ते

मान्याः !

नववर्षारम्भो जातः नववर्ष शुल्कः प्रेष्यः।

पत्रप्रेषणेनापि वार्षिकशुल्कप्रेषणार्थं प्रार्थना कृता किन्तु स्वल्पैरेव महानुभावैः शुल्कप्रेषणं कृतम्। अतः सविनयं प्रार्थ्यते यत् शीघ्रमेव शुल्कप्रेषणेन सहायता क्रियताम्।

——सम्पादकः



# द्वितीयोऽध्यायः

## उपलब्धानां शुल्वसूत्राणां सविशेषं वर्णनम्

यज्ञो वैदिकज्ञानस्य मुख्यो विषयः । यज्ञशब्दोऽयं विज्ञानक्षेत्रे पारिभाषिको वर्तते । यतो हि यज्ञशब्दस्य निष्पत्ति यज् देवपूजासंगतिकरणदानेष्विति धातोः १ "यजयाचयतविच्छप्रच्छरक्षो नङ्" २ इति सूत्रेण नङ् प्रत्ययं कृत्वा "कुहोश्चु" ३ रिति सूत्रेण नस्य ञत्वे विधाय "जञोर्ज्ञः" इति नियमानुसारेण ज्ञेत्येकादेशं विधाय भवति । अस्य समस्तार्थास्तत्र दृश्यन्ते । यथा श्रेष्ठानाञ्ज्येष्ठानां वा पूजनं यज्ञो-भवति । स्वसदृशेभ्यः समानेभ्यो वा सङ्गतिकरणमपि यज्ञो भवति । स्वनिम्नेभ्यः कनिष्ठेभ्यो वा दानमपि यज्ञः उच्यते । इयञ्च निष्ठता महत्ता वा न केवलं मनुष्याणामेवास्ति, प्रत्युत समस्तस्यापि जगतः पदार्थजातस्य शक्तेर्गुणानाँ वाधिक्यं भवेत् । तदैव वस्तु पूजनीयं भवति । यत्र समानता भवति तदेव-सङ्गतियोग्यञ्जायते यत्र न्यूनता भवेत् तदेव प्राप्तियोग्यञ्जायते । वयमपि पूर्वसदृशैरेव पूजायोग्याः सङ्गतियोग्याः प्राप्तिकरणयोग्याश्च भवेम । एवं जड़चेतनात्मकञ्जगत् परस्परंलाभान्वितं भूयमानं यज्ञशब्देन व्यपदिश्यते । एवं "यज्ञो वै श्रेष्ठतमं कर्म ४" यज्ञवर्णनं शतपथब्राह्मणे वर्तते । इमे यज्ञास्त्रि-विधाः-कर्मयज्ञज्ञानयज्ञोपासनायज्ञभेदाद् । तत्र कर्मयज्ञसम्बद्धा विषया इमेः—

षोड़शसंस्कारशिक्षाहारवस्त्रगृहसमाजराज्यकृषिपशुपालनसंगीतगणितभूगोलज्योतिषवैद्यकरसायनभवनयन्त्रशस्त्रवाहनयुद्धविद्याभिधाः ।

ज्ञानयज्ञसम्बद्धा विषयाः—

ईश्वरजीवपुनर्जन्मकर्मफलसृष्टिप्रलयवर्षाश्रमस्वाध्यायादयश्च । उपासन यज्ञसम्बद्धा विषयाः—

---

१. धातुपाठे १००२
२. अष्टाध्यायाम् ३-३-९०
३. तत्रैव ३-४-६२
४. शतपथब्राह्मणे १-७-४५

सदाचारदयास्नेहदर्शनभक्तिवैराग्ययोगसमाध्यादयश्च । ५ एषु त्रिषु यज्ञेषु लौकिकं पारलौकिकञ्च वेदज्ञानञ्चरितार्थम्भवति । विद् ज्ञान इति धातो ६ "भावे,' इति सूत्रेण घञ्प्रत्ययं विधाय, वेदशब्दस्य निष्पत्तिर्जायते । अत्र भावकर्मकरणानीति घञर्थाः । अतो ज्ञानज्ञेयपदार्थज्ञानसाधनानि वेदशब्दस्य वाच्यानि । पाणिनिः स्वीये धातुपाठे विद्धातोः—सत्ता–विचारणालाभनिवासपरानर्थानपि प्रदर्शितवान् ७ । तत्र विचारणार्थश्च ज्ञान एवान्तर्भवति । सत्तालाभनिवासार्था अवशिष्यन्ते । तत्रापि पूर्वोक्तप्रत्ययेन वेदशब्दसिद्धिर्जायते । यस्माद्वेदशब्दार्थोऽतीव गम्भीरो जायते । लाभस्त्वानन्दस्योत्पादको भवति । अथवानन्दरूप एव वरीवर्ति । एवं सूक्ष्मविचारणया सत्ताज्ञानानन्दरूपा ये ब्रह्मपदवाच्यास्त एवार्था वेदशब्दस्यापि विद्यन्ते । अथवैवमपि वक्तु शक्नुमः, यद् विद्धातोरत्र सत्तेत्यर्थस्तेनोत्पत्तिः । ज्ञानार्थेन जीवनम् । लाभार्थेन लयोऽपि गृह्यते एवं विदार्थे ब्रह्मलक्षणङ्घटते । यथा—"यतो वा इमानि भूतानि जायन्ते. येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति ८ इति । ८

प्राचीने वाङ्मये ब्रह्मविद्यावेदशब्दा एकस्मिन्नर्थे प्रयुज्यन्ते । त्रिभ्यो-वेदेभ्यः—"त्रयं ब्रह्म, त्रयीविद्या, त्रयोवेदाः एव भूताः शब्दा यत्रतत्र वैदिकवाङ्मये दरीदृश्यन्ते । तदैवोच्यते "सत्यं ज्ञानमनन्तं ब्रह्म, ति । एवभूतस्य व्यापकवेदस्योपकारकत्व यज्ञद्वारेणैव प्रत्यक्षरूपेणावलोक्यते । जीवात्मना सहैव यज्ञस्योत्पत्तिरपि विहिता । यथाः—

सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुग् ।।९

अग्निहोत्रमारभ्याश्वमेधपर्यन्तं यज्ञाः निर्दिष्टाः । तेषां प्रयोगो यद्यपि ब्राह्मणसूत्रग्रन्थेषु विविधरूपेण दृश्यते, तदपि मूलन्तु, ऋग्वेदस्य प्रथममन्त्रे समवलोक्यते । यथा–"अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं

———

५. पण्डितरघुनन्दनशर्मणोवैदिकसम्पत्तौ पृ. ३५०
६. धातुपाठे १०६४
७. विद्सत्तायाम् ११७१, विद्विचारेण १४५०, विद्चेतनाख्याननिवासेषु १७०९ विद्लृ लाभे १४३२
८. तैत्तिरीयोपनिषदि ३-१
९. श्रीमद्भगवद्गीतायाम् ३-१०

रत्नधातमम् १० । अत्र यज्ञशब्दस्य साधनं साध्यञ्चेत्युभावपि प्रतिपादितावर्थौ । अथर्ववेदे चास्य किमपि वैशद्येन वर्णनं लभ्यते यथा –

राजसूयं वाजपेयमग्निष्टोमस्तदध्वरः ।
अर्काश्वमेधावुच्छिष्टे जीवबर्हिर्मदिन्तमः ॥
अग्न्याधेयमथो दीक्षा कामप्रश्छन्दसा सह ।
अग्निहोत्रञ्च श्रद्धा च वषट्कारो व्रतं तपः ॥
चतुर्होतार आप्रियश्चातुर्मास्यानि नीविदः ११ ।

एषु मन्त्रेषु ये यज्ञाः समाम्नाताः तेषामुपक्रमं प्रदर्शयन् गोपथब्राह्मणमप्याह:

"अथातो यज्ञक्रमाः । अग्न्याधेयमाग्न्याधेयात्,पूर्णाहुति पूर्णाहुतेरग्निहोत्रमग्निहोत्रात्, दर्शपूर्णमासौ दर्शपूर्णमासाभ्यामाग्रहायणमाग्रहायणाच्चातुर्मास्यानि, चातुर्मास्येभ्यः पशुबन्धः, पशुबन्धादग्निष्ठोमः अग्निष्ठोमाद्राजसूयो राजसूयाद् वाजपेयः, वाजपेयादश्वमेधः. अश्वमेधात्पुरुषमेधः, पुरुषमेधात् सर्वमेधः, सर्वमेधाद्दक्षिणावन्तो, दक्षिणावद्भ्योऽदक्षिणा, अदक्षिणाः सहस्रदक्षिणे प्रत्यतिष्ठन्ते । वा एते यज्ञक्रमाः १२

एवम्भूता यज्ञा यस्यां भूमौ विधीयन्ते सा यज्ञभूरित्युच्यते । तत्रापि न केवलं भूमावेव यज्ञनिष्पादनम्भवति । अपितु "गृह्यस्थालीपाकानां कर्म । परिसमुह्योपलिप्योल्लिख्योद्धृत्याभ्युक्ष्याग्निमुपसमाधायेत्यारभ्य पर्यग्निङ्कुर्यात्१३, इत्यन्त न्तथा "वेदं कृत्वा वेदीं करोति" इति निर्देशाद् अग्निस्थापनाय, प्रथमतः पञ्चभूसंस्कारान्कृत्वा वेदीनिर्माणं कुण्डनिर्माणम्वा विधीयते । तेषान्निर्माणप्रकारा शुल्बसूत्रेषु प्रदिष्टाः सन्ति । तानि यद्यपि कृष्णशुक्लभेदात्मकस्य यजुर्वेदस्य षड्केभेदयोजनात्सप्तविधत्वमेव वर्तते तथापि तेषु त्रयाणामेव बोधायनापस्तम्बकात्यायशुल्बसूत्राणां वैदिकसाहित्ये महत्महत्वमस्ति । तत्र क्रमशः समेषाम्विवेचनं प्रदर्श्यते–

१. बोधायनशुल्वसूत्रम् :–

---

१०. ऋग्वेदसंहितायाम् १-१-१

११. अथर्ववेदे ११-७

१२. गोपथब्राह्मणे १-५-७

१३. पारस्करगृह्यसूत्रे १-१

तैत्तिरीयसंहिताया बौधायनशाखायारन्तर्गतत्रिंशत् प्रश्नः । बौधायन-शुल्वसूत्रनाम्नोच्यते । अस्याः संहितायाश्चतुर्थकाण्डस्य तृतीये प्रपाठके चित्ति-वर्णनप्रसङ्गे पञ्चचित्तीनां विविधानामिष्टकानाञ्चयनस्यातिविस्तरेण वर्णनम् । पञ्चमकाण्डे चोख्याग्निचित्युपक्रमगार्हपत्यचयनक्षेत्रकर्मणप्रथमचि-त्युपधानादिविषयाणां प्रतिपादनम् । अचलेष्टिकाचयनेऽपस्या प्राणभृदपान-भृत् संयतेष्टिकानां विधानं वर्तते । द्वितीयचित्या मश्वि न्मृतव्या प्राणभृदपस्या-दीनां द्वात्रिंशदिष्टकानाञ्चयनविधानम् । चतुर्थे प्रपाठके - इन्द्रतनु - यज्ञतनु नक्षत्रसंख्या वैश्वदेवेष्टकानां विवेचनमस्ति । पञ्चमे प्रपाठके हिरण्याह्वरूपा-त्मेष्टका वर्णिताः । षष्ठे प्रपाठके कुम्भभूतेष्टके, सप्तमे चर्षभ वज्रिणीराष्ट्रभृ-द्भूतेष्टकानां विवेचनं क्रियते । एवं शुल्वसूत्राणामाधारभूतां सामग्रीं प्रति स्पष्टसंकेतो दृश्यते । सूत्रस्यास्य प्रमुखो व्याख्याता द्वारकानाथ यज्वा वर्तते ।

अस्य सूत्राणि व्याकृतधर्मवाचकोपपत्तिसमन्विताख्येषु त्रिष्वध्यायेषु विभज्यन्ते । थीबोमहाभागोऽप्येवमेवमन्यत ।

प्रथमाध्यायस्य चत्वारि खण्डानि, द्वितीयस्य त्रीणि, तृतीयस्य च चतुर्दशखण्डानि वर्तन्ते । एवं प्रकारेणैकविंशति खण्डात्मकं शुल्वसूत्रमिदम् । कैलेण्डमहाभागेनेदं दशाध्यायात्मकं मतम् यथा-

| अध्यायः | खण्डम् | सूत्राणि |
|---|---|---|
| १ | १ | ४६ |
| | २ | १३ |
| | ३ | २५ |
| | ४ | २६ |
| २ | ५ | २८ |
| | ६ | २३ |
| | ७ | ३१ |
| ३ | ८ | ४० |
| | ९ | २१ |
| ४ | १० | ४३ |
| | ११ | ३१ |
| | १२ | १७ |
| | १३ | ८ |
| | १४ | ११ |
| | १५ | ७ |

| अध्याय: | खण्डम् | सूत्राणि |
|---|---|---|
| ५ | १६ | ३६ |
| ६ | १७ | २२ |
| ७ | १८ | १६ |
| ८ | १९ | १७ |
| ९ | २० | ३३ |
| १० | २१ | २१ |
| | समग्रसूत्रसंख्या | ५१९ |

डा० सत्यप्रकाशमहोदयः स्वाभाविकीं सूत्रसंख्यां-५५० मितां प्रदर्शयति १४। डा० थीबोमहोदयो विभूतिभूषणदत्तश्च ५२५ परिमितां सूत्रसंख्यां प्रदर्शयामासतुः १५।

विषयविवेचनम् :-

प्रथमोऽध्यायः- अस्मिन्सूत्रेषु प्रयुक्तपरिमाणानां भूमेर्मापनविधीनां व्याख्या, अन्यपारिभाषिकशब्दानामर्थप्रकाशनञ्च समुपलभ्यते। रज्जुना समचतुरस्राद् विषमचतुरस्रनिर्माणप्रकारः, द्विकरणी, त्रिकरणी, सम्मिश्रकरणं, व्यवकलनञ्च' समचतुरस्राच्च सदृशक्षेत्रफलभाजकस्य त्रिभुजस्य वृत्ताकारस्य निर्माणप्रकारोऽपि प्रदर्श्यते। मण्डलाकारात् समचतुरस्रस्य केनोपायेन निर्मितिर्जायते, एतदपि प्रदर्श्यते। समचतुरस्रस्य करणस्य तस्य भुजया सम्बन्धः २ (वर्गमूलम् ) १.४१४२१३। गार्हपत्यादाहवनीयस्यान्तरं दक्षिणाग्नेः स्थानस्यावधारणं प्राच्यावधारणं पितृयज्ञवेद्याः स्वरूपं, महावेद्याः स्वरूपं सौत्रामणियज्ञस्य वेद्या निर्धारणम्, प्राग्वंशस्य वर्णनम्, हविर्धानानां स्थापना, उत्तरवेद्याः स्वरूपं, चत्वालानामाकाराः, सदस् धिष्ण्या, आग्नीध्रीयं आगार, मार्जालीया धिष्ण्या, यूपावटञ्चेति विषयाः प्रतिपादिताः। एवं पश्यामो वयं यदस्मिनध्याये शूल्वसूत्रीयाणां पारिभाषिकशब्दानां विवेचनं यत्र क्रियते, तत्रैव रेखागणितीयसमस्यानां ससूक्ष्म विवरणं समाधानञ्चापि दीयते। केचन नियमास्तादृशाः सन्ति, ये वार्तमानिकान् वैज्ञानिकानपि चमत्कुर्वन्ति। यथा पाइथागोरसनियमञ्चर्चयन्तः आधुनिका वैज्ञानिका बौधायनमपि न

१४. बौधायनशुल्वसूत्रे पृ. ३२

१५. द सांइस ऑफ दि शुल्व पृ. २-३

विस्मर्तुं प्रभवन्ति । तथैव वर्गमूलस्य चर्चाकाले शुल्वसूत्राणां विस्मृति र्न कर्तुं पार्यते । यद्यपि २ संख्याया वर्गमूलमभीष्टसूक्ष्मगणनां यावन्नागच्छत्, तथापि गणितीयतथ्यस्य चमत्कारिणाऽऽविष्कारेण जगदुपकृतन्तदा, यदा संसारे वैज्ञानिकानाम्मतेऽन्धकार एवावृत्त आसीत् ।

## द्वितीयोऽध्यायः

अस्मिन्नध्याये नानाग्नीनां विस्तरेण बिवरणं प्राप्यते । अत्र विविधप्रकाराणां नानापरिमाणानामिष्टकानां सविस्तरं विवेचनं क्रियते । सोमयागस्य सर्वप्रथमं या वेदिर्निर्मीयते तस्याः परिमाणं ७$\frac{1}{3}$ वर्गपुरुषपरिमितं भवेदथवा १०८००० वर्गाङ्गुलपरिमितं भवेत् १६ । द्वितीयाग्नेः ८$\frac{1}{2}$ वर्गपुरुषपरिमाणम्भवेत् । एवं वर्धमानमग्नेः परिमाणं १०१$\frac{1}{3}$ पुरुषपरिमिति पर्यन्तञ्जिगमिषति १७ । अश्वमेधायैकविंशते र्वह्नीनाञ्चयनमावश्यकम्भवति । यद्येवन्न भवेत्तदा तदनन्तरं २२$\frac{1}{2}$ पुरुषपरिमाणस्याग्नेश्चयनङ्करणीयम् । यदि यज्ञात्पूर्वं ३०$\frac{1}{2}$ पुरुषपरिमिताग्नेश्चयनञ्जायते, तदा यजमानः ३१$\frac{1}{2}$ पुरुषपरिमिताग्नेश्चयनङ्कुर्यात् १८ । एवमनेकनियमानान्नियमनन्तत्र दृश्यते । प्रथमश्येनचिदग्नेर्निर्माणाय १००० इष्टकानामावश्यकता भवति गार्हपत्याग्निस्वरूपविषयेऽपि मतमतान्तराणि सन्ति । केषाञ्चिन्मतेऽयञ्चतुरस्रो भवेत्, केषाञ्चिन्मते च मण्डलाकारः । अस्य परिमाणं व्याममात्रम्भवेत् । अथारत्नि चतुष्टयमात्रम् अथवा षोडषाङ्गुलम्वा भवेत् । विविधवेदिभ्योऽनेकप्रकारस्य प्रस्तारस्योपाया वर्णिता विद्यन्ते । परिधीनां धिष्ण्यानाञ्च विभजनविधिमुपवर्ण्य सम्वत्सरपर्यन्तमुख्याग्निधारकाय यजमानायादिश्यते । यत्स उख्यभस्मनासंसृष्टेष्टकानां निर्माणङ्कारयेत् १९ ।

---

१६ बौधायनशुल्वसूत्रे २·१

१७. तत्रैव २-४-५

१८. तत्रैव २-९-१०

१९. तत्रैव २-७८

त्रिवारमग्निचयनानन्तरं यजमानः छन्दश्चिदग्नेश्चयनङ् कुर्यात् । अत्रेष्टकास्थान उपयुक्तमन्त्राणामुच्चारणमेवाभीष्टं भवति । केवलन्तत्तत्स्थानं करेण स्पृशेत् छन्दश्चिदग्नेराकृतिश्श्येनचिदिव भवति २०। यतो हि श्येनचिदेव सर्वासाञ्चितीनां प्रकृतिः ।

तृतीयोऽध्यायः

अत्र श्येनचिन्नामकाग्नेरात्मनः पुच्छस्य शिरसः पक्षयोश्चयनविधिः प्रदर्श्यते । पक्षविस्तारस्येष्टकाचयनप्रकारस्य प्रथमद्वितीयचित्योश्च वर्णनमपि तत्रैवास्ति ।

चतुर्थोऽध्यायः

अत्र वक्रपक्षव्यस्तपुच्छ–श्येनचिद्वेदिका निर्माणार्थं नियमानां प्रदर्शनमस्ति । षड्विधेष्टकानां विवरणं, चित्या त्रिविधरूपाणां विवरणं द्विविधवक्रपक्षश्येनचिद्वेदिकायाः प्रस्तारस्य निरूपणं, कङ्कचिदलजचित्प्रउगचिदुभयतः प्रउगचिद्वेदीनाञ्चयनस्य वर्णनमप्यत्र प्राप्यते ।

पञ्चमोऽध्यायः

अत्र रथचक्रचित्साररथचक्रचिद्वेद्योर्निर्माणप्रकारः प्रबोध्यते । नाभ्या विभागा स्तत्रत्यमण्डलनिर्माणप्रकारा, नेमिविभाजनमरविभजनन्तथा रथचक्रचिदर्थं षोडशप्रकारस्येष्टकानां विधानं विधीयते ।

षष्ठोऽध्यायः

अध्यायेऽस्मिन्त्सरूद्रोणचिद्वेदिकाया विवरणं दीयते । तस्या विभिन्नचितीनां या इष्टकाः सन्ति, तासान्निर्माणस्य विधानमपि प्रदर्श्यते । द्रोणचिद्वेदिकाया आत्मा चतुरस्रो भवति ।

सप्तमोऽध्यायः

अत्रापि द्रोणचिद्वेदिकाया विलगरूपेण निष्पादनं प्रदर्श्यते । समचतुरस्रमण्डले परिवर्तनं विभिन्नचितिषु नवविधेष्टकानां प्रयोगवि–

२०. बोधायनशुल्वसूत्रे २ ८१-८३ ।

धानं प्रदर्श्यते । तथाध्यायस्यान्ते । परिचाय्याग्नेश्चयनविधानङ्क्रियते ।

## अष्ठमोऽध्यायः

अत्र श्मशानचिदग्नेश्चयनस्य विवरणं प्रथमतो दीयते । तदनु प्रउगुभयतः, प्रयुग् चिदग्नी दशधा विभज्येते । यतो विंशतिसंख्याका-स्त्रिभुजा ज्जायन्ते । अग्नेः क्षेत्रस्य परिमाणमेतत्तस्य पञ्चदशसमचतुर-स्त्ररूपे विभाजनम् । अग्नेरुच्चतावृद्धिकरणस्योपाया ँ पञ्चचित्तीनाञ्च वर्णनमुपलभ्यते ।

## नवमोऽध्याय।

अस्मिन्नध्याये कूर्मचिद्वेद्याश्चयनस्य विधानमस्ति । यो ब्रह्मलोक-विजिगीषुरस्ति स एव कूर्मचिच्चयनङ्करोति । अत्र कूर्मस्य निर्माणं द्विधा क्रियते । वक्राङ्गरूपो मण्डलाकाररूपश्च अनेकविधेष्टकानां प्रयोगैस्तस्य निर्मितिर्जायते । विशेषतः शिरसो निर्माणार्थं विभिन्ना-काराणामिष्टकानां प्रयोगो विधीयते ।

## दशमोऽध्यायः

अस्मिन्नध्यायेऽपि विभिन्नप्रकारस्य कूर्मचिदग्नेश्चयनस्य विधानं दृश्यते । तत्रैवाश्वमेधिकाग्नेश्चयनस्य संकेतोऽपि दृश्यते २१ । एक-स्मिन्ग्रन्थे द्वादशविधानां काम्याग्नीनाञ्चयनस्य विधानङ्कृतम् । बौधा-यनशुल्वसूत्रमेवाकारतो विषयप्रतिपादनदृष्टयाश्च समुपलब्धेषु शुल्ब-सूत्रेषु सर्वतोऽतिशायी । अत एवादौ तस्यैव प्रतिपादनमस्माभि ँ कृतम् । यतोहि "सर्वे पादा हस्तिपादे निमग्नाः" इत्युक्त्यनुसारेणाप्येव सर्वे शुल्बग्रन्थाः समाहिताः । विदुषां सम्मत्यानुसारेण न केवलमाकृत्यैवेदं सूत्रं गौरवान्वितमपितु सर्वप्राचीनमपि वरीवर्ति ।

## मानवशुल्बसूत्रम्

सूत्रमिदं मानवश्रौतसूत्रस्याङ्गमस्ति । गद्यपद्यात्मकमेतत् शुल्बोत्त-रेष्टकावैष्णवञ्चेति त्रयोभागा अस्य । शुल्वभागे शुल्वस्वरूपमायाम-प्रकारो दर्शपूर्णमासयोर्वेदिकायाः परिमाणं, सरलरेखायाम्मण्डलनिर्मा-णम्, त्रिविधाग्नेखराणां परिमाणस्य विचारो दृश्यते । आहवनीयः १४

२१ बौधायनशुल्वसूत्रे १०-१६-२०

# सम्पादकीयम्

## अयमंकः

अंकोऽयं किञ्चित् लघ्वाकार एवोपायनी क्रियते अत्र कारण द्वय-मस्ति । एकतस्तु वर्षेऽस्मिन् कर्गजेषु मासिकी मूल्यवृद्धिः जाता । पूर्वं रूप्यकं रूप्यकद्वयम्बा काठिन्येन वर्षे वृद्धि मुपयाति स्म मूल्ये । परन्तु वर्षेऽस्मिन् त्रिशत् रूप्यकाणि प्रतिरिमं वृद्धिर्जाता । द्वितीयं कारणमस्ति शैत्यप्रकोपः । अतः जनवरी फर्वरी—अंकौ मार्चमासे प्रतीक्षणीयौ । पृष्ठसंख्या पूर्तिरपि करिष्यते ।

## वार्षिकशुल्कम्

कृतास्वपि प्रार्थनासु प्रेषितेष्वपि च बहुतरपत्रेषु संस्कृतज्ञा एव शुल्कं न प्रेषयन्ति । अतोऽस्माकं निवेदन पुनरास्ति भवतां सेवायं यद्भवद्भिः स्वकर्तव्यं पालयद्भिः वा. शुल्कं प्रेषणीयम् । इदमपि पत्रप्रकाशने महद्-बाधाकरभवति ।

## संस्कृतज्ञाः सुप्ताः

यद्यपि देशे गृहे गृहे कापि प्रगति जायमाना दृश्यते । परन्तु संस्कृतज्ञास्तु प्रायेण सुप्ताः एवावलोक्यन्ते संस्कृतस्य का स्थितिः शिक्षाक्रमे भारतस्य भवेदत्र देहलीस्थाः संस्कृतज्ञाः सर्वेऽपि न किमपि आचरन्ति —इदानीमिति अनुभूयते ।

— केशव शर्मा

**************************

## सूचना

जनवरी फर्वरी के अंक मार्च में आप की सेवामें भेजेंगे । सभी पाठक नोट कर लें ?

सम्पादक

R. N. 6384/57 ल—33/एस. एम. / 10/89

# संस्थान के प्रकाशन



१. फलादेश कल्पतरुः (मूल संस्कृत में)
हिन्दी अंग्रेजी टीका सहित ४० वर्ष के अनुसन्धान और अनुभव पर आधारित जातकफल कहने का अनुपम ग्रन्थ ... मू. ७०-००

२. संस्कृत कोशवाङ्मयम् (संस्कृत में)
संस्कृतकोशसाहित्यपर अनुसन्धानपूर्ण विवेचन ... ... मू. १७५-०

३. झञ्झा (संस्कृत में)
शेक्सपीयर के द टैम्पेस्ट नाटक का सचित्र रूपान्तर ... मू. ५०-००

४. हिमाचलप्रदशे संस्कृतस्य प्रसारो विकासश्च (संस्कृत में)
हिमाचल में संस्कृत के प्रसार विकास की विस्तृत कहानी ... मू. ५०-००

५. वैजयन्ती (हिन्दी काव्य)
नवीन प्राचीन विचारधाराओं का गीतिमय समन्वय ... मू. १५-००

६. सूनृता (संस्कृत काव्य)
आधुनिक गीतों में गुम्फित अनुपम उपहार ... ... मू. २५-००

७. शक्तिसौरभ (हिन्दी में)
संस्कृत लेखिकाओं का इतिहास ... ... ... मू. १५-०

८. विचारामृत (हिन्दी में)
आचार्य जी के विभिन्न विषयों पर जीवनोपयोगी लेख दो भाग ... मू. १५-००

९. पथ्यापथ्यविनिर्णय
सं. हिं. टीका सहित आयुर्वेद का दुर्लभ ग्रन्थ ... ... मू. २०-००
(डाकव्यय सर्वत्र पृथक्)

सम्पर्क सूत्र :—
सचिव,

**संस्कृत शोध संस्थान**
भारती विहार मशोबरा
शिमला १७१००७ (हि. प्र.)

# दिव्यज्योतिः

संस्कृतस्य सचित्र मासिकम्





विविधानुसन्धानलग्नाः भारतीयवैज्ञानिकाः



वर्षम् ३५ शिमला जनवरी, १९६१ अङ्कः

# विषयानुक्रमः



# दिव्यज्योतिः

हि० क० सं० भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकागतमुद्रणदोषाणां सम्पादकीयनीतिविषये च अकादमीदायित्वं नास्ति ।

हिमाचल प्रदेश- पंजाब-हरियाणा-जम्मूकश्मीर - मध्य प्रदेश–राजस्थान–महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।

पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरससुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकल कलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशितं भवति

पत्रस्य वार्षिक मूल्य ३५ रु० अर्धवार्षिकं १८ रु० एकस्याङ्कस्य च रु० २-५० भवति ।

वर्षारम्भः अक्तूबर—मासतः भवति । ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति ।

ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोवरा, शिमला-१७१००७ हि० प्र०" इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

## परिचयः


संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, — दूरभाषः 78459

राष्ट्रपतिसम्मानिताः

प्रधानसम्पादकः— आचार्य केशव शर्मा एम. ए., एम, फिल, साहित्यरत्नम् — ,, 8 200

दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-१७ (हि. प्र )

मुद्रकः प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि. प्र,)

स्वामी:- श्रीमती आचार्य रत्नकुमारी शर्मा

जनवरी. १९९१ माघः २०४७ – वर्षम्–३५ अङ्कः ४

वार्षिक मूल्यम् ३५ रु०

# देवगीतम्

श्री ओम् प्रकाश 'राही'
आचार्य, एम॰ ए, एम, फिल.      राज-उच्च विद्यालय,बोगधार. हि. प्र.

आदौ भजेऽहं सततं गणेशम् यस्यास्ति शोको भजने न शेषः ।
भक्तार्तिनाशं विदधाति नित्यं विघ्नापहं तं सुखदं परेशम् ।

ध्याये तदाहं जननीं भवानीं दीनार्तवर्गाय सुखैकदात्रीम् ।
शोकापहर्त्रीं शरणागतानां संसारकष्टैर्बहुपीड़ितानाम् ।

ध्यायामि शम्भुं शुभदं तदाहं गौरीपतिं भस्मविभूषितांगम् ।
नीलगलं दयालं शोभायमानं हि त्रिपुण्ड्भालम् ।

ध्यात्वा सुदेवान् सुखदान् सदाहं कार्यं स्वकीयं विदधामि नित्यम्
आराधनामेष करोति 'राही' कार्यं मदीयं हितकारकं स्यात






# राष्ट्रगीतम्

१

धर्म ऐक्यं हि चेद् भारते नागतं
पश्य देशस्य किम् चाथ राष्ट्रस्य किम् !

अद्य देशे युवानः सुषुप्तिं गताः
संस्कृतिर्भारतस्य विदेशे स्थिता ।

शासकाः शासनं आद्रियन्ते नहि
पश्य रा ...

२

उग्रवादेन आतंक-आरक्षणे-
वेदना मनसि कस्यापि संजायते ।

कामक्रोधादिभिर्जायते कल्मषम्,—
पश्य देशस्य किम् ! ...

३

म-प्र- उ-प्र- उडीसा विहारस्तथा
खाड़िदेशोऽमरीका कुवैतोऽथवा ।

शत्रुता गेहे-गेहे हि वृद्धिं गता
पश्य देशस्य किम् —

४

नाटकीयैर्मनैर्नाटकं क्रियते
सभ्यता स्वीयराष्टस्य -उत्पाट्यते ।

राजनीत्या प्रभावेन सर्वं इदम्
पश्य देशस्य किम्

५

सर्वधर्मस्यभू रामजन्मस्य वा
बावरस्यान्यधर्मस्य कस्याथवा ।

शोचनीया दशा नेतृभिः कारिता
पश्य देशस्य...



आचार्य श्याम लाल शर्मा
व्याकरणसाहित्याचार्य, एम- ए-
—मुख्याध्यापक... रा-प्र.पा. गुमराा जि. शिमला (हि.प्र)

# सांप्रदायिकता

प्रो. देवदत्त भट्टिः

राजकीय महाविद्यालय मालेर कोटला पंजाब

१

सांप्रदायिकताभित्तिः पतिष्यत्येव सत्वरम्
निर्मिता बालुकाधारे कथं स्थास्यति निश्चला!

२

वात्याया अस्ति वेगोऽयं निर्यास्यत्येव सत्वरम्
कथं स्थास्यति साम्मुख्ये! स्वभावेनैव यश्चलः ।

३

अस्त्यस्थायिः जगत्सर्वं सर्वा च रचना इह
कथयन्ति जनास्तात! नेह किंचिदनश्वरम् ।

४

बहवो विपदो भ्रातः! समायाताः पुरापि रे!
रोमहर्षकरा क्रूराः धरा याभिर्हि वेपते ।

५

सहिष्यते सविश्वास सकल साम्प्रदायिकम्
सुराष्ट्रं भारतं नूनं दधाति तद्धियं बलम् ।

६

स्मर रावणमौरङ्गजेबौ सीकदरं तथा
दुर्योधनं च पाम्मानमन्यांश्च राक्षसाधमान् ।

७

निष्पापानां च रक्तेन रञ्जिता यैरियं धरा
इतिहासोऽस्ति पूर्णोऽयमेतादृक्संकथानकैः ।

८

साम्प्रदायिकतां त्यक्त्वा लोकसंहारकारिणीम्
कान्तं खण्डं दिवो भास्वत् कुरुताद् भारतं पुनः

९

कर्तव्यमस्ति सर्वेषामस्माकं देशवासिनाम्
रक्षेम भारतं देशं प्राणान्दत्वा प्रियानपि

१०

निष्कृतेः पयसां मातुःसुकालो ह्ययमागतः
निबद्धाश्चैकतासूत्रे दधामो वलवद्वपुः ।

❋

❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋

# पाठकाः प्रार्थ्यन्ते

मान्याः !

नववर्षारम्भो जातः नववर्ष शुल्कः प्रेष्यः । पत्रप्रेषणेनापि वार्षिकशुल्कप्रेषणार्थं प्रार्थना कृता किन्तु स्वल्पैरेव महानुभावैः शुल्कप्रेषणं कृतम् । अतः सविनयं प्रार्थ्यते यत् शीघ्रमेव शुल्कप्रेषणेन सहायता क्रियताम् ।

—— सम्पादकः



# सत्यभक्तदोहावली

मू.ले- स्वामीसत्यभक्तः—सत्याश्रम, वर्धा

अनूदयिता...श्रीशान्तप्रकाशः सत्यदासः, सी-५।ए बी सी
बिरलाग्राम.नागदा जं.४५६३३१

किञ्चित्परिवर्तितकृतिं स्वीयामभिव्यनक्ति
यशोहरं तं दुर्जनं जनता चौरं वक्ति ।१।

एकस्मिन्नुक्तेऽनृतेऽनृतशतमत्रोच्येत
भारवता किं चेतसा प्रसन्नता लभ्येत ।२।

करोतु सोत्साहं सदा जीवनस्य कार्याणि
कार्येभ्यो न पलायतां व्यायाम एव खलु तानि ।३।

उन्मादसमा वर्ण्यते मादकता क्रोधस्य
क्रुद्धैर्नाप्तुं पार्यते बोधः कर्तव्यस्य ।४।

छागं गव्यं माहिषं पीयत आशु पयोऽपि
कथमिदमुचितं स्याद्घृणा नरस्पृष्टजलतोऽपि ।५।

अर्हति क्षन्तुं न प्रभुर्दुष्कृत्यं कस्यापि
पक्षे पातः कथ्यते क्षमा तु पापस्यापि ।६।

अदन्तु कृत्वा चर्वणं पूर्णं येन स्वदेत
धन.भोजनरक्षा भवेदारोग्यं वर्धेत ।७।

अनृतं यावन्मानसे चिन्ता तावच्चैव
मलमुदरे यावद्वसेत्तावत्तत्र रुजैव ।८।

यावद्दातुं शक्यते तावत्सः प्रददातु ।
यस्मै यच्चावश्यकम् तदितः स आददातु ।९।

जीवनार्थमावश्यकम् भवति समादानन्तु ।
दातुमतः किञ्चित्सदा श्रमकार्यं कुर्वन्तु ।१०।

विहसति जीवनसाधकः शोकं मनसि समाप्य ।
रुदन्नपि प्रीणाति न तस्य संगतिं प्राप्य ।११।

यत्किञ्चिद् भुवि दृश्यते नो संज्ञा सत्यस्य ।
भवनीयं भवतीह यत् 'सत्यं' संज्ञा तस्य ।१२।

स्याज्जगतश्चेन्मङ्गलम् जङ्गलगमनं वल्गु ।
जगन्मङ्गलं स्यान्न चेज्-जङ्गलगमनं फल्गु ।१३।

अस्तु जगन्मिथ्या तथा—प्युदरं मिथ्या नास्ति ।
उदरपूरणार्थं सदा सर्वेषां मृगयास्ति ।१४।

कायस्य स्थिरमासनम् उड्डयते चित्तन्तु ।
बको ध्यानमग्नो यथा मत्स्ये नेत्रयुगन्तु ।१५।

नित्यं जगदुन्नीयता – मस्तु निराशा मैव ।
यत्र निराशा विद्यते शवश्चलंस्तत्रैव ।१६।

धर्मे मा कुरु विग्रहम् मा कुरु चान्यायोऽपि ।
जलमपि जगतीं दहति चेन्-निर्वापयिता कोऽपि ? १७

स्वीयं ददाति जीवनम् सेवायामत एव ।
माता शिशवे भवति किम् अस्पृश्य शूद्रेव ।१८।

उदरं परिपूर्णं तथा पूर्णो निधिर्यदेव ।
मिथ्या जगदिति कथ्यते लोकैरत्र तदेव ।१९।

पुष्पदलं चिन्वन्तु भोः शूलदलं प्रविहाय ।
पुष्पदलं तच्चास्ति यत् प्रभवेज्जगद्धिताय ।२०।

यल्लब्धं स्यात्तद्धनम् अस्तु विभज्य विभज्य ।
स्थास्यति सर्वं किञ्चिदपि नागन्ता सङ्कृत्य ।२१।

अन्यान् ये भिक्षाशिनो न किञ्चिदुपकुर्वन्ति ।
कामं स्युः कृशविग्रहाः भुवि भारास्ते सन्ति ।२२।

लभतेऽमूल्यं भोजनम् परमुदरं नाप्नोति ।
मूर्खस्तु स्वीयं वधम् रसलोलुपः करोति ।२३।

विपरीते मोहे भवेद् वैरं चेतस्यत्र ।
प्रेम परन्त्वनुभूयते सानन्दं सर्वत्र ।२४।

मोहोऽस्ति स्वार्थेन सह किन्तु प्रेम न्यायेन
रक्तेन स उपमीयते तत्पाटलकुसुमेन ।२५।

मोहि मनोऽर्हति चिन्तने किं सत्यासत्यस्य ?
विद्वत्तापि लभेत चेद् भारो मस्तिष्कस्य ।२६।

श्रमं करोतु निरन्तरम् भविताऽऽप्तिर्भाग्यस्य ।
भाग्य श्रमाद्धि निर्मितम् श्रमः पिता भाग्यस्य ।२७।

लब्धञ्चेत्किञ्चिद्धनम् करोतु दानं तस्य ।
जगते जगतो दीयते कार्यः को गर्वस्य ? ।२८।

एषा जीवन साधना हृद्यविषीदन्नेव ।
प्रसीदयेज्जनतां सदा स्वयं प्रसीदन्नेव ।२९।

Registrar

एषा जीवनसाधना गृहे गृहे मित्राणि ।
स्वल्पधनेन भवन्तु भोः शुभजीवनचित्राणि ।३०।

वचनैरनुकूलान्न चेत् कार्यास्ते द्रक्ष्यन्ति ।
कुख्यातान् युष्मान् जनाः तत्कालं त्यक्ष्यन्ति ।३१।

सिंहो सिंहं हन्ति नो यतो जातिरेकास्ति ।
किन्तु जडे मनुजेत्वयम् न विवेकोऽपि चकास्ति ।३२।

प्रामाणिकता श्रमिकता यस्य हृदि स्नेहोऽपि ।
स्वजनं तमेव मन्यताम् मानवोऽस्तु सः कोऽपि ।३३।

विवेकस्तु रसलोलुपे मूर्खेऽस्मिन्न चकास्ति ।
परान्न प्राप्तिः सम्भवा परोदराप्तिर्नास्ति ।३४।

लगेत्करः कस्यापि न जातिर्नश्यत्येन ।
नरो नरोऽस्ति तमत्र गौः पयः पाययत्येव ।३५।

संयम सेवा–बोधतः शून्या ये तु भवन्ति ।
गुरूवेषिणः कुसाधवो भुवि भारास्ते सन्ति ।३६।



## निवेदनम्

येऽग्रिमकालाय ग्राहकतां नेच्छन्ति तैः कृपया वर्षान्ते सूचनीयम् । वर्षं यावदपि पत्रं प्राप्यापि प्रेषितेषु च बहुपत्रेष्वपि नोत्तरदानं कष्टाय खलु ।

कार्यालयः ।




## शिक्षामन्त्रिणः—महत्त्वपूर्णा घोषणा

हि० प्र० संस्कृत शिक्षक परिषदः सिरमौरजनपदीयं संस्कृत-सम्मेलनं १८-१-९१ तारिकायां नाहननगरे सुसम्पन्नम् । एतस्य मुख्य अतिथिपदं सम्मान्याः शिक्षामन्त्रिमहोदयाः श्री राधारमण शास्त्रि महाभागा । समलङ्कुर्वन् । सम्मेलनस्यारम्भः वैदिकमन्त्रोच्चारणैः सम्पादितेन यज्ञेन अभवत् । सम्मेलने स्थानीया विधायिका कु० श्यामा शर्मा, जिलाधीशः श्री भीमसेनः, संस्कृताधिकारी श्री रमाकान्त जोशी जिला शिक्षाधिकारी अन्ये च विभागाध्यक्षाः उपस्थिताः अभवन् । पंचायतभवनस्य मुख्यकक्षः (हाल) दर्शकैः परिपूर्णः संजातः ।

मध्याह्ने सार्धैकादशवादनकाले सांस्कृतिक-कार्यक्रमः समारब्धः । सर्वप्रथमं संस्कृतमहाविद्यालय नाहनस्य कन्याभिः सरस्वतीवन्दना सम्पादिता । तदनन्तरं रा० उ० वि० बोगधारस्य छात्रैः स्व संस्कृताध्यापकेन सममेव देशस्य वर्तमानस्थितिपरिचायकं संस्कृतगीतम् 'लोकतन्त्रम्' कवालीरूपेण गीतम् तथा च सिरमौरजनपदस्य सुप्रसिद्ध लोकनृत्यं नाटी' अपि संस्कृत भाषायां प्रदर्शितम् शास्त्री ओमप्रकाशेन सम्पादितमेतल्लोकनृत्यं दर्शकैः विशेषेण अभिनन्दितम् । तत्पश्चात् नाहन नारगादिविद्यालयानां विद्यार्थिभिः संस्कृतगीतश्लोकोच्चारणादीनि प्रस्तुतानि । सांस्कृतिककार्यक्रमस्यान्ते बोगधारस्य छात्रैः अध्यापकैश्च सम्मिलय ओमप्रकाशशास्त्रिणः निर्देशने डा०

मथुरादत्तपाण्डेयविलिखितम् संस्कृतनाटकम् 'नारदमोहिनीयम्' अभिनीतम्।

अस्मिन्नवसरे विविधैः वक्तृभिः संस्कृतस्य महत्वं प्रदर्शितम्। कु० श्यामा शर्मा स्वीये भाषणे दिवंगतं संस्कृतस्य प्रमुख विद्वांसम् श्री परमानन्दशास्त्रिणमस्मरत् तथा च तेषां रचनाप्रकाशनाय संस्कृत-परिषदं न्यवेदयत्। मुख्यअतिथिमहाभागाः स्वीये होरैककालीने संस्कृतभाषणे सर्वानपि विदुषः प्रभावितानकुर्वन्। तैरुक्तम् यत् संस्कृतप्रचारप्रसारयोरेष एव सर्वोत्तमः कालः, अतः सर्वैः सम्मिल्य एतदर्थं प्रयासो विधेयः। तैराश्वासनं प्रदत्तं यत् हिमाचले दशमीकक्षा-पर्यन्त संस्कृतमनिवार्यरूपेण पाठयिष्यते। तैः एतदप्युक्तम् यत् जिला प्रशासनेन भूम्यधिग्रहणाय प्रयतनीयम् यत्र शीघ्रमेव संस्कृतमहा-विद्यालयाय नवीनभवनस्य निर्माणं कृतं स्यात्। तैः संस्कृतज्ञानां समस्याः समाधातुमपि स्वीयसर्वकारस्य आश्वासनं प्रदत्तम्। स्वीये भाषणे तैः संस्कृतस्य सरलीकरणाय वल प्रदत्तम् तथा चैतदर्थम् ओमप्रकाशशास्त्रिणः नाटीनृत्यमुदाहरणस्वरूपं प्रस्तुतम्। सांस्कृतिक कार्यक्रमेभ्यस्तैः स्वेच्छानिधितः पञ्चसहस्ररूप्यकाणां प्रदानस्य उद्घो-षणं कृतम् तैराशा प्रकटीकृता यत् एतादृशैः कार्यक्रमैः संस्कृतस्य संस्कृतज्ञानाञ्च भविष्यमुज्ज्वलं भविष्यति भाषणान्ते तैः पारितोषि-कानि वितरितानि।

कार्यक्रमस्यान्ते संस्कृतशिक्षकपरिषदः प्रधानेन मुख्य अतिथिभिः सह सर्वेषामप्युपस्थितानां दर्शकानां धन्यवादः विहितः। वस्तुतः एतत्सम्मेलनम् नाहननगरनिवासिभ्यः अन्येभ्यश्च दर्शकेभ्यः स्मरणीयं स्थास्यतीति आशा क्रियते।

---

नवीनसदस्य निर्माणे सहयोगो देयः।

सम्पादकः

# संस्कृतस्य महती हानिः

महतः खेदस्य विषयः यत् हिन्दु-सेवा प्रतिष्ठानस्य निर्देशकः श्रीमान् अजितकुमारमहोदयः ३-१२-१० दिनांके मध्यरात्रे बेङ्गलूरु तुमकूरू मार्गे प्रवृत्ते कारबाहनापघाते दिवं गतः । श्री विजयेन्द्रनरहरिः, श्रीनरेन्द्रः, श्री गणेशश्चेति त्रयः कार्यकर्तारः तेन सह आसन् ते अपि स्थले एव प्राणान् अत्यजन् । ——

# परमपूजनीयाचार्य चरणानां

# संस्कृत प्रचार सम्मेलनम्

सोलन मण्डलान्तर्गतकाटलग्रामटिकायां कुनिहारोपनगरसमीपे श्री रोशनलाल शास्त्रिणां सविधे तेषामेव च संयोजकत्वे श्रीमद्भागवत महापुराणसप्ताहयज्ञः सम्पन्नः ।

सप्ताहपर्यन्तं श्रद्धालवः सहस्रसंख्यासु समारोहे ऽस्मिन् समवेताः । श्री चरणैर्यत्र धार्मिक सामाजिक — आध्यात्मिकविषयव्याख्यानेन तोषिताः लोकास्तत्रैव हिन्दूनां प्राणभूतायाः संस्कृत भाषायाः अध्ययनाध्यापनं प्रति अपि प्रेरिताः । सम्मेलनमिदं २१ जनवरीतः २८ जनवरी यावत् १९९१ खीष्टाब्दे जातम् ।

※ ※ ※ ※ ※ ※ ※ ※ ※

# श्री परमानन्द शास्त्रिणामवसानेन—

# — संस्कृतस्य महती क्षतिः ।

नाहन सिरमौर मण्डलान्तर्गत नाहन नगर स्थाः श्री परमानन्द शास्त्रिणोऽवसिताः । एते कतिपयसंस्कृतस्य मौलिकरचनाकाराः आसन् । एतेषां 'इन्दुकाव्यम्' हि. प्र. अकादम्याः प्रकाशितम् परन्तु- अधुना-अपि एतेषां बह्व्यो रचनाः सन्ति या अप्रकाशिताः । एते संस्कृतस्य प्रख्यातकाव्यकारा अतीव सरलाश्चासन् ।

शास्त्रिणामवसानेन या क्षतिः संस्कृतसंसारे विशेषतोऽत्र प्रदेशे जाता सा नूनमेवापूरणीयाः । दिव्यज्योतिः परिवारोऽत्र स्वीयां समवेदनां प्रकटयति । जगदीश्वरी माता तेभ्यः सद्गतिं दद्यादिति प्रार्थना । —:०:—

# संस्थान के प्रकाशन



१. फलादेश कल्पतरुः (मूल संस्कृत में)
हिन्दी अंग्रेजी टीका सहित ४० वर्ष के अनुसन्धान और अनुभव पर आधारित जातकफल कहने का अनुपम ग्रन्थ ... — मू. ७०-००

२. संस्कृत कोशवाङ्मयम् (संस्कृत में)
संस्कृतकोशसाहित्यपर अनुसन्धानपूर्ण विवेचन ... ... मू. १७५-०

३. झञ्झा (संस्कृत में)
शेक्सपायर के द टैम्पेस्ट नाटक का सचित्र रूपान्तर ... मू. ५०-००

४. हिमाचलप्रदशे संस्कृतस्य प्रसारो विकासश्च (संस्कृत में)
हिमाचल में संस्कृत के प्रसार विकास की विस्तृत कहानी ... मू. ५०-००

५. वैजयन्ती (हिन्दी काव्य)
नवीन प्राचीन विचारधाराओं का गीतिमय समन्वय — मू. १५-००

६. सूनृता (संस्कृत काव्य)
आधुनिक गीतों में गुम्फित अनुपम उपहार — ... मू. २५-००

७. शक्तिसौरभ (हिन्दी में)
संस्कृत लेखिकाओं का इतिहास ... — ... मू. १५-००

८. विचारामृत (हिन्दी में)
आचार्य जी के विभिन्न विषयों पर जीवनोपयोगी लेख दो भाग — मू. १५-००

९. पथ्यापथ्यविनिर्णय
सं. हिं. टीका सहित आयुर्वेद का दुर्लभ ग्रन्थ ... ... मू. २०-००
(डाकव्यय सर्वत्र पृथक्)

सम्पर्क सूत्र :—
सचिव,
**संस्कृत शोध संस्थान**
भारती विहार मशोबरा
शिमला १७१००७ (हि. प्र.)



# वैदिकशासनव्यवस्था

डा- सत्यदेव विद्यालंकार
विद्यालयविभाग
गुरुकुलकांगड़ी वि- वि- हरिद्वार



राजानो निजशासनं द्रढ़यितुं श्रीणीह सूत्राण्यपि
कुर्युस्तानि सदैव विज्ञमनसा राज्येऽखिले भूषिते ।
ये वांछंति सुखानि यानि खलु ते भूमण्डले मण्डिते
वेदेष्वस्ति हि शासनस्य विहिता साध्वी व्यवस्थाखिला ।१।

या राजार्यसभा प्रबुद्धमनसा राज्यस्य कर्माणि हि
रात्रौ वा दिवसेऽथ सान्ध्यसमये प्रातर्मुहुश्चाखिले ।
दुःखं किं किमहो सुखं क्वजगति व्याप्तञ्चपश्येदियम्,
वेदेष्वस्ति हि शासनस्य विहिता साध्वीव्यवस्थाखिला ।२।

या लोके प्रथिता सभासु नितरां विद्या सभार्याहिता,
सा लोके प्रचरेत् विशुद्ध गतिना विद्यागति वायुवद् ।
आर्षं पाठविधिं नियोजयति सा शुद्धां स्थितिं स्थापयेद्,
वेदेष्वस्ति हि शासनस्य विहिता साध्वीव्यवस्थाखिला ।३।

आर्यां धर्मं समास्ति वेदविहिता धर्मप्रचाराय या,
सर्वत्रैव भुवं सदाविरहितां कुर्यादधर्मेण सा ।
को धर्मो कतमोऽस्ति धर्म सहितः मार्गं दिशेत् सा जनान्,
वेदेष्वस्ति हि शासनस्य विहिता साध्वी व्यवस्थाखिला ।४।

क्रमशः

# नव वर्ष की प्रथम किरण के साथ हिमाचल
के
# व्यावसायिक जीवन में नए युग का शुभारम्भ

## बिक्री-कर ढांचे का सरलीकरण

## हिमाचल प्रथम चरण पर बिक्री-कर लगाने वाला देश का पहला राज्य



१. बिक्री कर की वर्तमान ११ दरों को घटाकर ५ कर दिया गया है जिनमें से आम व्यापारियों पर केवल ३ ही दरें लागू होंगी।

२. डबल रोटी काँच की प्लास्टिक तथा लाख की चूड़ियां, बिन्दी, सिन्दूर, हरी मिर्च, हरा नारियल, जमेट्री बाक्स, स्केच पेन ड्राइंग करने के रंग, रबड़ स्याही की टिकियां, पैंसिल तराश पर बिक्री कर समाप्त।

३. राजमाश, रौंगी, सफेद चने तथा चोकर पर बिक्री कर ७ प्रतिशत से घटाकर ३ प्रतिशत तथा माचिस, खल और बुनाई योग्य ऊन पर ४ प्रतिशत कर दिया गया है।

१. जो व्यापारी हिमाचल के अन्दर ही से बिक्री कर देने के बाद समान खरीद कर बेचते हैं उनको पजी करण से मुक्ति। इस प्रकार लगभग ७० प्रतिशत दुकानदार हिसाब — किताब रखने, विवरणियां देने के झंझट से बच जायेंगे।

२. स्वैच्छिक कर निर्धारण सीमा १.२५ लाख से बढ़ा कर ३ लाख रुपये तथा जो हिमाचल के बाहर से आयात नहीं करते उनका कर योग्य क्वांटम एक लाख से बढ़ाकर ३ लाख करने का निर्णय।

३. स्वेच्छिक कर निर्धारण के लिए १६ विवरणियों के स्थान पर अब केवल ५ विवरणियाँ तथा फार्म

— हिम लोक सम्पर्क —

# सम्पादकीयम्

## अभिनन्दनम्

हिमाचल प्रदेशे संस्कृतज्ञानां विभिन्नसंगठनैः संस्कृत विद्वद्भिर्हितेच्छुभिश्च भाषाया अस्याः चिरकालात् प्रसारविकासकृते प्रयासाः क्रियमाणाः सन्ति। काले २ ये प्रयासाः कृताः तत्र यत्साफल्यमसाफल्यम्बा तत्तत्काले प्राप्तमभूत्तस्य सूचना, समीक्षा च पत्रेऽस्मिन् दत्ताऽभूत्।

इदानींतन शिक्षामन्त्रिणा श्रीराधारमणशास्त्रिणा च संस्कृतस्य दशमकक्षापर्यन्तमध्यापनस्य (तत्रापि चानिवार्यरूपेण) या घोषणा कृता सा सर्वतो भावेन प्रशंसनीया। एष प्रस्तावश्चिरात् –संस्कृतहितेच्छुभिः प्रशासनस्य पुरतः स्थाप्यते स्म। कदाचित्—विंशति अंकानां संस्कृतमध्यापितम् ततश्च अष्टमकक्षापर्यन्तं संस्कृताध्यापनमक्रियत। परन्तु सर्वमिदं ऐच्छिकमेवाभूत्। अधुना विश्वसिमो यत् संस्कृतहितेच्छुकानामियं चिरप्रतीक्षिता आशा पूर्णा भविष्यति। मान्यः शिक्षामन्त्री च शीघ्रातिशीघ्रं स्वघोषणां सत्यापयिष्यति इति कामनाऽस्मदीया। वयं शिक्षामन्त्रिमहोदयस्य हृदयेनाभिनन्दन कुर्मः। बहुभ्यः प्रदेशेभ्योऽत्र पत्रैः समभिनन्दनमस्माकं पार्श्वे विद्वद्भिः संगठनैश्च प्रेषितम्। अतः समस्तभारतस्य संस्कृतसमाजोऽभिनन्दयति शिक्षामन्त्रिणम्।

—

## हि. प्र. विश्वविद्यालये संस्कृतम्

प्रदेश विश्वविद्यालयस्य पूर्व संस्कृतविभागाध्यक्षेण संस्कृतस्य पारम्परिकशिक्षार्थिनां यदहित कृतमासीत् तत्र प्रदेशस्योच्च न्यायालयः– रक्षकरूपेण तत्र संस्थापितस्य एतत्सम्बन्धिअभियोगस्य पक्षे निर्णयमकरोत्। संस्कृतस्याहितसम्पादकस्य संस्कृतप्राध्यापकस्यैव च दुष्कार्यात् संस्कृतमभिरक्षितवान्। अत्र यैः प्रदेशस्य युवक संस्कृत शिक्षकैः–अभियोगमिदं प्रारब्धुं प्रेरणाऽदायि, अहर्निश च प्रयासाः कृतास्तेऽपि दिव्यज्योतिषा सर्वथाऽभिनन्द्यन्ते।

—:०:—

## सूचना

अवशिष्ट अंक अगले मास आपकी सेवा मे भेजेंगे।

— कार्यालयः



— केशव शर्मा



R. N. 6384/57 ल—33/एस. एम. / 10/91

## श्राद्धकाले स्मरणम् स्व. श्री लालबहादुर शास्त्री



पूर्वप्रधानमन्त्री च
देशरक्षा-परः सदा।
संस्कृतस्य समुद्धर्ता
सारल्यस्य प्रवर्तकः।





## श्री राधारमण शास्त्री

हिमाचल प्रदेशस्य
शिक्षामन्त्रिपदे स्थितः।
संस्कृतस्य प्रचाराय
सततं कार्यसंरतः।





# दिव्यज्योतिः

संस्कृतस्य सचित्र मासिकम्



**श्रीदेवदत्त भट्टी**

राजकीय महाविद्यालय मालेरकोटलाया उपाचार्याः संस्कृत विभागाध्यक्षाश्च पञ्जाब प्रशासनेन संस्कृत साहित्यकार शिरोमणि पुरस्कारेण सम्मानिताः ।

—★—

वर्षम् ३५ शिमला फर्वरी, १९९१ अङ्कः ५

# दिव्यज्योतिः

हि० क० सं० भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकागतमुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति ।

हिमाचल प्रदेश—पंजाब-हरियाणा-जम्मूकश्मीर - मध्य प्रदेश—राजस्थान—महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।

पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरससुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकल कलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्ग्लमानेन) प्रकाशितं भवति

पत्रस्य वार्षिक मूल्य ३५ रु० अर्धवार्षिकं १८ रु० एकस्याङ्कस्य च रु० २-५० भवति ।

वर्षारम्भः अक्तूबर—मासतः भवति ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति ।

ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोबरा, शिमला-१७१००७ हि० प्र०" इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

# परिचयः


संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, — दूरभाषः 78459

राष्ट्रपतिसम्मानिताः

प्रधानसम्पादकः— आचार्य केशव शर्मा एम. ए., एम, फिल, साहित्यरत्नम् — ,, 8 200

दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-७ (हि. प्र.)

मुद्रकः प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि. प्र.)

स्वामी:- श्रीमती आचार्य रत्नकुमारी शर्मा

दिसम्बर गताङ्कादग्रे

# प्रमुखशुल्वसूत्रेषु कुण्डमण्डपविधिः

अङ्गुलपरिमितः, समचतुरस्रो भवति गार्हपत्यः १३$\frac{१}{३}$ अथवा १३$\frac{६}{८}$ अङ्गुलमितो व्यासार्धमण्डलाकाररूपो भवति दक्षिणाग्निश्च १६$\frac{१}{२}$ अङ्गुलव्यासार्धमितोऽर्धमण्डलाकारे भवति चरकरथवेद्याः परिमाणमपि तत्रैव प्रदर्श्यते। या वेदिरैन्द्राग्नपशुयागे प्रयुज्यते। अस्या ईषा १८८ अङ्गुलमिता भवति। तिर्यगक्षः १०४ अङ्गुलमितो जायते। युगश्च ८६ अङ्गुलमितो भवति। तदनु पाशुकी पाकयाज्ञिकी-मारुती वारुणीपैतृकीवेदीनां विवेचनङ्क्रियते। तत्र मारुतीवारुणी-वेद्योर्विवेचनमन्येभ्यः शुल्बसूत्रेभ्यो नवीनमस्ति अत्रत्य मानववर्णनमपि बौधायनशुल्वसूत्राद् भिद्यते २२ प्राङ्वंशवर्णनप्रसङ्गे मानवशुल्वे तस्य प्रक्रमो दीयते। प्राङ्वंशः १० अरत्नीनां २४×१० अङ्गुलानां समचतुरस्रो भवति। यत्रैका पत्नीशाला ४ अरत्नीनां समचतुरस्ररूपा निर्मीयते। प्राङ्वंशस्य पूर्वस्यां दिशि त्रिप्रक्रमेषु ६० अङ्गुलेषु महावेद्याः पश्चिमकोणो भवति। ततोऽपि पूर्वस्यां दिशि प्रक्रमयात्रान्तरे २७×६ अङ्गुलीनां दीर्घचतुरस्राकारः सदसः पश्चिमकोणो भवति। सदसः पूर्वस्यां दिशि चतुर्षु प्रक्रमेषु हविर्धानस्य पश्चिमकोणो भवति। हविर्धानं १२ अरत्नीनां समचतुरस्रागारो भवति। तत्र हविरादानाय द्वौ शकटौ स्थाप्येते। हविर्धानात्पूर्वस्यां दिशि ५$\frac{१}{२}$ प्रक्रमान्तर उत्तरवेदि भवति यां पूर्वेण यूपारोपणं जायते दक्षिणेन च मार्जालीय धिष्ण्या भवति।

अस्मिन्सूत्रे प्रक्रमपरिमाणविषयेऽतीव व्यत्यासोऽवलोक्यते। कुत्रचिदयं प्रक्रमो ४६$\frac{६}{७}$ ऽङ्गुलानां, २३ कुत्रचिदयं ५० अङ्गुलानां स्वीक्रियते २४। अन्यत्र च ५५ अङ्गुलानामप्यस्ति २५। १६ अङ्गु-

---

२२. मानवशुल्बसूत्रे १०, १, २, ५,

२३. मानवशुल्वसूत्रे १०, १, ३, ७.

२४. तत्रैव....... १०, ', २, १,

२५. तत्रैव....... ५, २, १२, ५,

लानामपि स्थितिरवलोक्यते । बौधायनशुल्बसूत्रेऽस्य परिमाणः ३० अङ्गुलानां समुपलभ्यते । नात्र केवलं प्रक्रमपरिमाणविषय एव वैपरीत्यमपित्वन्येषां यज्ञसम्बन्धिसामग्रीणां परिणाहविषयेऽपि वैपरीत्यमस्ति । केश-यव-सर्षपाङ्गुलवितस्तिशयादीनामपि बौधायनान्न्यूनाधिक्यं दृश्यते ।

वैष्णवप्रकरणेऽपि मानानां पुनश्चर्चनर्नङ्क्र्यते । तत्र १२ अङ्गुलानामेकः प्रादेशो वर्णितः । द्वयोः प्रादेशयोरेका अरत्निः प्रक्रमो वा पुनर्मतः २७ । यतोहि चितिषु यजमानस्याङ्गुलङ्गृह्यते । स यदि दुर्बलो भवेत्त दा १० अङ्गुलस्थाने १२ अङ्गुला भविष्यन्ति २८ ।

उत्तरेष्टकप्रकरणे विविधवेदीनान्निर्माणेष्टकानां संख्या भेदः प्रदर्शितः । सर्वासामेवेष्टकानामुत्सेधः ⅓ अर्वयुतो भवति । अर्व प्रादेशसम एव । गार्हपत्यादीनामग्नीनां धिष्ण्यानाञ्च क्षेत्रफलस्य तत्र प्रयुज्यमानानामिष्टकानाञ्च विवरणमपि दीयते सौमिक्यां सामान्यवेद्यां स्थाप्यमानानां वस्तूनां विवरणमपि प्रस्तुतम् २९ ।

तत्रैव वैष्णवप्रकरणे वेदीनां विविधप्रमाणानि, चतुरस्रस्य परिमण्डले परिवर्तनं, परिमण्डलस्य च चतुरस्रे परिवर्तनं, यथा जायते तदपि प्रदर्श्यते । सौत्रामणी सौमिकी-दार्शिकीवेदीनां परिमाणान्याकाराश्चापि प्रदर्श्यन्ते । गार्हपत्याग्ने द्वौ भेदौ । तत्र प्रयुज्यमानेष्टकानां प्रकारा आग्नीध्रमार्जालीयहोत्रीयब्राह्मणच्छंसीयधिष्ण्यासु प्रयुज्यमानेष्टकानामपि वर्णनं दीयते । श्येनचिद्दलजचित्कङ्कचिद्वेदीनां पक्षाणां, पुच्छानां शिरसाञ्च यानि परिमाणानि तान्यपि वर्णितानि । ३०

---

२६. बौधायनशुल्बसूत्रे १. १५,

२७. मानवशुल्बसूत्रे १. ३. २. ३,

२८. तत्रैव — १०, ३. २. १.

२९. मानवशुल्बसूत्रे—१०, २, ३, १ तथा १०, २, ४ ६ ।

३०. तत्रैव १०, ३, ५

प्रयुगुभयतः प्रउगयोस्तिर्यक् चतुरस्रस्वरूपयोर्वर्णनं विधाय समुह्याचिच्छमशानचिद्द्रोणचितां वर्णनङ् क्रियते । रथचक्रचिन्मण्डलस्य क्षेत्रफलं १०½ वर्गपुरुषपरिमितं भवति । अस्य निर्माणविधिश्चतुःषु श्लोकेषु प्रदीयते । त्रिगुणात्मिको द्वितीयो विधिरपि वर्णितोऽस्ति । अस्मिन् विधौ सर्वासां दिशां निर्माणं त्रिकरणीमाध्यमेन भवति । रथचक्रस्य नेमि ७३ अङ्गुलानां भवति व्यासश्च ४३ अङ्गुलानाङ्क्रियते । अतोऽराणां व्यासः ३=७४ अङ्गुलमितो भविष्यति । नेमिश्च ३ =१२६ अङ्गुलमिता भविष्यति ।

अस्मिन्सूत्र सुपर्णचितोऽपि चर्चा चर्च्यते ३१ । या नवीना वर्तते । अस्यसूत्रस्य त्रिभागेषु खण्डानामावण्टनमेवमस्तिः—

शुल्बम् ४ खण्डात्मकम् ।

उत्तरेष्टकम् ५ खण्डात्मकम् ।

वैष्णवम् ७ खण्डात्मकम् ।

अस्य सूत्रस्य वैशिष्ठ्य दिग्ज्ञानप्रदर्शनप्रकारैरपि वर्धते बौधायनापस्तम्बसूत्राभ्यान्न कोऽप्युपायो दिग्ज्ञानाय प्रदर्श्यते । कातीयसूत्रेण त्रिविधा उपाया दिग्ज्ञानस्य निर्दिष्टाः । किन्तु मान्वशुल्बसूत्रे चत्वारुपाया वर्णिताः । अस्य सूत्रस्यापस्तम्बसूत्रेण कातीयशुल्वसूत्रेण च सम्बन्धो वरीर्वति एवं स्थालीपुलाकन्यायेन मानववाराहबौधायनापस्तम्बकात्यायनमैत्रायणीयेषु षट्शुल्बसूत्रेषु मुख्ययोर्द्वयोर्मानवबौधायन–योरेव सविशेष विषयविवेचन विधाय विस्तरभयाद् विरस्ये । एतेष्वापस्तम्बशुल्बसूत्रमतिविस्तृतमस्ति । तस्योपयोगित्वमपि जाने । परमत्र सविशेषबर्णनेन प्रस्तावप्रस्तारभयमस्ति । शुल्ब वर्णितशुल्बसूत्रग्रन्थयोरिवापस्तम्वशुल्बसूत्रस्य ४९८ सूत्रेष्वपि यज्ञवेदीनाङ्कुण्डानाञ्च वर्णनं प्राप्यते । द्विखण्डात्मके कात्यायायनशुल्वसूत्रे षट्कण्डिकासु १०२ सूत्राणि सन्ति । अस्मिन्सूत्रे दिग्ज्ञानस्य वैशिष्ट्यमस्ति यस्य वर्णनं मानवसूत्रे विशेषरूपेण विद्यते । वाराहशुल्बसूत्र मैत्रायणीयशुल्बसूत्रमपि चोपलभ्येते । परमनयो र्नास्तिवैशिष्ठ्यम् । तथैव हिरण्यकोशि शुल्बसूत्रमपि पूर्णरूपेण तु नैव प्राप्यते । परमस्योद्धरणान्यापस्तम्बादिषु शुल्बसूत्रग्रन्थेषु दृग्गोचरी भवन्ति । कुण्डमण्डपविधीनां सामा येन नैतेषां शुल्वसूत्राणामत्र विशेषत परिचयो दीयते ।

---

३१. मानवशुल्बसूत्रे १०, २, ४, ६ ।

# यज्ञप्रसङ्गे कुण्डानाम्वेदिकानाञ्च महत्वम्

जगतः समुपलब्धसाहित्ये वेदस्य सर्वोत्कृष्टं स्थानमस्ति। यतोहि-ऋग्वेदः प्राचीनतमो ग्रन्थः। तत्र प्रथममन्त्र एव यज्ञस्य चर्चा चर्चिता ३२। वेदविद्यानुसारेण यज्ञविद्या सर्वतोऽतिशायिनी ऋग्वेदे यज्ञस्य यद्रूपं मिलति, तत्पिण्डब्रह्माण्डयो र्ज्ञानस्य साधनरूपं वर्तते। तदैव यज्ञस्य द्वौ भेदौ क्रियेते। पुरुषमेधो नरमेधश्च। तत्पदार्थस्य त्वं रूपे परिणतिः पुरुषमेधरिति कथ्यते। त्वं पदार्थस्य तत्पदार्थे परिवर्तनन्नरमेधरित्युच्यते। "तत्त्वमसीति" महावाक्ये तत्त्वञ्चेत्येतयोः पदयोः कोऽर्थः ? तत्रोच्यते पुरुष इति तत्पदार्थः, त्वञ्चेति प्रकृतिपरम्पदम्। अथवा तदिति पदं प्राणपरं त्वचेति पदञ्च रयिसंकेतकम्। अथवाग्नोऽन्नादश्चोभयोरेतयोरर्थः Spirit and Matter अनयो र्लीलेव "यज्ञ" इति भण्यते। "एकोऽहं बहुस्यामेति" जिज्ञासिते परब्रह्मणि मायाशक्तेरुत्पत्ति र्जाता। पुनर्बहुत्व जिज्ञासैवाविद्याशक्तिरूपे तत्र समुत्पन्ना। एकस्मिन्ब्रह्मणि मठघटाद्याकाशात्मकजीवानां नानात्वविपरिणामः समजनि। एतादृशो व्यापार एव पुरुषमेधः पुनरनेकजन्मनामन्ते यदा सद्गुरुसान्निध्येन स्वस्वरूपविज्ञानविचिकित्सा समुत्पद्यते, तदा जीवं पुरुषार्थचतुष्टयं सद्गृह्णन्नन्ते मोक्ष लभते ३३। एष एव नरमेधः अतो यज्ञः प्राकृतिकं वर्तते। तदेवोच्यते "यज्ञो वै विष्णुरिति" यजति-विद्वद्भिरियते वा, स यज्ञः परमेश्वरः ३४। अर्थात् विश्वव्यापकस्य कर्मणो नाम एव यज्ञो भवति। तदैव श्रीमद्भगवद्गीतायामप्युक्तम् :—

ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म समाधिना ३५॥

———

३२. अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम् होतारं रत्नधातमम्॥
ऋग्वेदे १, १, १

३३. मुण्डकोपनिषदि—३, १. १.
द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।

३४. यज्ञतत्त्वे—पृ. ४२

३५. गीतायाम्—४. २४

सर्वत्र ब्रह्मणो दर्शनमेव यज्ञ उच्यते। महाभारतेऽपि तदेवोक्तम्:-

यज्ञो यज्ञपति र्यज्ञो यज्ञाङ्गो यज्ञवाहनः ।
यज्ञभृद् यज्ञकृद् यज्ञी यज्ञभुग् यज्ञसाधनः ॥

अतिवृष्ट्यनावृष्टियुद्धमहामारीसङ्कटेभ्यः प्रभृति आध्यात्मिकाधिदैविकाधिभौतिकेभ्यस्त्रिविधतापेभ्यश्च सन्तप्तानाञ्जीवानां संरक्षणार्थं यत् किमपि कर्मजातङ् क्रियते, तत्सर्वं यज्ञपदवाच्यम्। प्रजापतिना सृष्ट्यादौ प्रजानामुत्पत्तियज्ञसहितैव कृता। यथोक्तमस्ति :—

सहयज्ञाः प्रजासृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुग् ॥ ३६

तादृशोऽयं यज्ञः समस्तजगति कामधेनुरूपोऽस्ति। तदेव श्री मद्भगवद्गीतायाम् ''यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः'' इत्यपि निर्दिश्यते ३७। अत एव महामहोपाध्याया गिरिधरशर्मणोऽपि प्रत्यपादयम् 'वेदे सम्पूर्णविज्ञानं यज्ञरूप एव प्रकाशितम्। यथा विज्ञानशालानां सहायं विनैव केवल पुस्तकस्थस्यैव वर्तमानविज्ञानस्य शिक्षा सुदुष्करा, तथैव यज्ञशालां विना वैदिकविज्ञानस्यापि शिक्षापूर्णैव ३८। अतो यज्ञो भारतीयजीवनस्यैकमतिप्राचीनतमसर्वव्यापि चाङ्गमस्ति षोडशसंस्कारावसरे येनकेनापि रूपेण यज्ञस्यैव विधानं विधीयते स्म। षड्दर्शनपरिगणनायामपि प्रथमं वैशेषिकेण पाञ्चभौतिक तत्त्वानामेवोपदेशः कृतः न्यायेन तस्योपदेशस्यैव प्रमाणैः परीक्षणङ् कृतम्। पुनः सांख्येनान्तरिकानाञ्चतुर्विंशतिसंख्याकानान्तत्त्वानां विवेचनं विहितम्। येषां योगेन स्वात्मनि प्रत्यक्षस्योपायाः प्रदर्शिताः। यतोहि 'स्वयमसिद्धः कथम्परान्साधयेत्' इति न्यायेन प्रथमं स्वानुभूतिरपेक्षते। तदनु मीमांसादर्शनं समागच्छति। यज्जिज्ञासुभ्य आन्तरिकं ज्ञानं यज्ञरूपेण वहिः प्रकटयति। यथा वेदम

---

३६. तत्रैव ३, १०

३७. गीतायाम् ३, ९

३८. वैदिकविज्ञान और भारतीय संस्कृती पु ५

ह्यावन्येषु प्रतीयते। 'प्रज्ञानं घनं ब्रह्म'' ''तत्त्वमसि'' ''अहं ब्रह्मास्मि'' ''सर्वं खल्विदं ब्रह्म'' इत्यत्रादौ प्रगाढ़ज्ञानस्यानुभवं स्वात्मनि कृत्वा- पुनः शिष्याय तस्यानुभूतिङ्कारयति। यस्य साधनं यज्ञविधिरेव तदेवान्ते मोक्षं लब्धु पार्यते। एष एव नरमेधयज्ञ- इति कथ्यते ''आधारं विनाधेयन्न तिष्ठति'' इति न्यायेन यज्ञस्याधारविषये यदा विचिन्त्यते, तदा कुण्डमण्डपयोरेवावस्थिति-र्जायते। तत्रैव यज्ञानां करणविधिः श्रूयते। यथा वायवीयसंहितायाम्—

अथाग्निकार्यं वक्ष्यामि कुण्डे वा स्थण्डिलेऽपि वा।
वेद्यामप्यायसे पात्रे मृण्मये वा नवे शुभे॥
स्थण्डिले वा प्रकुर्वीत सुसिद्धैः सिकतैः सितैः। ३९

मीमांसादर्शनेऽपि कुण्डस्थण्डिलयो र्निर्देशं विदधन्कथयति भगवा- ञ्जैमिनिः। यथा :—

''लिङ्गोपदेशश्च तदर्थवत्'' इति ४०। अर्थात् वेदमन्त्रेष्वीश्वरस्य लिङ्गानि प्रदत्तानि। यथा ''आग्नेय्याग्नीध्रमुपतिष्ठेत् ४१'' इति श्रूयते। यत्राग्नीध्रस्थानम्मण्डपविशेषः कथ्यते तस्मात् कुण्डमण्डपस्य विषये विचार्यते, शारदातिलके :—

नक्षत्रराशिवाराणामनुकूले शुभेऽहनि।
ततो भूमितले शुद्धे तुषाङ्गारविवर्जिते॥
पुण्याहं वाचयित्वा तु मण्डपं रचयेच्छुभम्।
पञ्चभिः सप्तभिर्हस्तैर्नवभि र्वामितान्तरम्।
षोडशस्तम्भसंयुक्तं, चत्वारस्तेषु मध्यगाः॥
अष्टहस्तसमुच्छाया संस्थाप्या द्वादशाऽभितः ४२।

एवं कुण्डमण्डपानान्निर्माणकालर्क्षवारभूम्याशुद्धीनामावश्यकता प्रदर्शिता। तदेवोक्तमस्ति शारदातिलकपदार्थादर्शटीकायामपि :—

———

३९. मन्त्रमहार्णवे पृ. ८ श्लो. २००
४०. जैमिनिसूत्रे २. २, ५१.
४१. ऋग्वेदभाष्यभूमिकायाम्—पृ. २७
४२. शारदातिलके २, १९-२२१

'ज्योतिषशास्त्रसमुक्तप्रकारेण नक्षत्रवारराशीनां मध्ये साध्यानुकूले नक्षत्रे, साध्यानुकूलराशौ, अनुकूलवारे शुभेऽहनि, ज्योतिषशास्त्रसमुक्त शुभतिथौ ततो मण्डपं रचयेत्" इति ४३। मण्डपनिर्माणमुहूर्तमपि गृहादिमुहूर्तवदेवावलोक्यते। तदैव राजमार्तण्डज्योतिषपुस्तके मुहूर्तप्रकरणे प्रत्यपादि यथा—

आदित्यद्वयरोहिणी मृगशिरो हस्तो धनिष्ठोत्तरा।
पूषाविष्णुमघानुराधपवनैः शुद्धैः सुताराञ्वितैः॥
सौम्यानां दिवसेषु पापरहिते योगे विरिक्ते तिथौ
विष्टित्यक्तदिने वदन्ति मुनयो वेश्मादि कार्यं शुभम्॥ ४४

एवं सामान्यनियमान् गृहादिकार्याणां प्रदर्श्य,

गुरुशुक्रार्कचन्द्रेषु स्वोच्चादिवलशालिषु।
गुर्वर्केन्दुवलं लब्ध्वा गृहारम्भः प्रशस्यते॥ ४५

एवं विशेषनियमान्प्रदर्शयामास। तत्र ग्रामाणां राशिभिः सह निर्मातृणां राशिमेलोऽप्यपेक्षते तदैवोक्तम्:—

स्वनामराशे र्यद्राशिर्द्विशराङ्केशदिङ्मितः।
स ग्रामः शुभदः प्रोक्तस्त्वशुभः स्यात्ततोऽन्यथा। ४६

एकभे सप्तमे व्योम गृहहानिस्त्रिषष्ठगे
तुर्याष्टद्वादशे रोगः शेष स्थाने भवेत्सुखम्। ४७

इत्थं स्वग्रामराश्योर्मेलं कृत्वोभयोः राशितः कुत्र, किम्फलं भवति, तदपि प्रदर्श्य आयाष्टकस्य नियमानपि प्रादर्शयत।

---

४३. तत्रैव पृ. ८१

४४ राजमार्तण्डे ४५

४५. ज्योतिषसारे वास्तुप्रकरणे पृ. १४

४६. ज्योतिषसारे पृ. १४३

४७. तत्रैव — पृ. १४३

४८. तत्रैव वास्तुप्रकरणे पृ. १४४

विस्तारगुणितं दैर्घ्यं गृहक्षेत्रफल लभेत् ।
तत्पृथग्वसुभिर्भक्तं शेषमायो ध्वजादिकः ।
ध्वजो धूमोऽथ सिंहः श्वासोरभेय खरो गजा ।
ध्वांक्षश्चैव क्रमेणैतदायाष्टकमुदीरितम् ।। ४८

लम्बतां दीर्घतया गुणनेन, यद्गुणनफलमायाति, तस्मिन् पिण्डे अष्टसंख्याया भागेन शेषिताङ्कानाम्नामानि, ध्वजः, धूम्रः, सिंहः, श्वानः, वृषभा, गर्दभः, गजः, काकश्चेति सन्ति । एतेऽङ्का वास्तुनामरूपेणो- च्यन्ते । तेषां फलानि नामानुसारेणैव ज्ञातव्यानि ।

यस्मिन्भूक्षेत्रे वास्तुशास्त्रानुसारेण यज्ञयागादीनां मण्डपानां निर्मा- णस्येच्छा भवेत् । तस्या भूमेः परीक्षाया अपि वास्तुतत्त्वज्ञः परीक्षा प्रदर्शिता यथा महाकपिलः पञ्चरात्र :—

तत्र भूमि परीक्षेत वास्तुज्ञानविशारदः ।
स्फुटिता च सशल्या च वाल्मिका रोहिणी तथा ।
दूरतः परिवर्ज्याभूः कर्तु रायुर्धनापहा ।
स्फुटिता मरणङ्कुर्यादुषरा धननाशिनी ।
सशल्या क्लेशदा नित्यं विषमा शत्रुतोभयम् । ४९

एवं भूमे दोषाग्प्रदर्श्य, वर्णानुसारन्तस्या ग्रहणयोग्यतापि लक्षण- ग्रन्थेषु निर्दिशता ।

श्वेता तु ब्राह्मणी पृथिवी रक्ता वै क्षत्रिया स्मृता ।
वैश्या पीता तु विज्ञेया कृष्णा शूद्रा प्रकीर्तिता ।।
ब्राह्मणी घृतगन्धा स्यात् क्षत्रिया रसगन्धभृद् ।
क्षीरगन्धा भवेद् वैश्या शूद्रा विट्गन्धिनी क्षितिः ।
मधुरा ब्राह्मणी भूमिः, कषाया क्षत्रिया स्मृता
वैश्या तिक्ताऽथ विज्ञेया, शूद्रा स्यात्कटुका मही ।।
ब्राह्मणीभूः कुशोपेता क्षत्रिया स्याच्छराकुला ।
कुशकाशकुला वैश्या शूद्रा सर्वतृणाकुला ।। ५०

---

४८. तत्रैव वास्तुप्रकरणे पृ १४४

४९. शारदातिलकटीकायाम्—पृ. ८१

५०. तत्रैव पृ. ८१

इत्थमनेकप्रकारेण वर्णानुसारं तस्याश्चयनङ्कर्तव्यं येन कर्मणा-शुसिद्धिर्भवेत् । तदेवोक्तम्:—

सिता पीता तथा रक्ता कृष्णवर्ण समन्विता ।
स्थिरोदका दृढ़ा स्निग्धा भूमि: सर्वसुखान्विता ।।
शीतस्पर्शोष्णकाले च वह्निस्पर्शा हिमागमे ।
वर्षासु चोभयस्पर्शा सा शुभा परिकीर्तिता ।।
सुगन्धिव्रीहिगन्धा च शुभगन्धगुता च या ।
सर्वेषामेव वर्णानां भूमि: साधारणी मता ।। ५१

एवं प्रकारेण भूमि परीक्ष्य तत्र होमकाले कुण्डं विधाय अथवा मण्डपं निर्माय, सर्वजनहिताय, सर्वजनसुखाय, नरमेधानुसारं यज्ञङ्कुर्यात् । येन तस्य परब्रह्मण: सृष्टि: प्रचलेत् । स्वकीयञ्च साफल्यम्भवेत् । होमकालस्त्रिविध: । यथा ब्राह्मणे प्रतिपादितम्, मनुनापि च गृहीतमस्ति —

उदिते जुहुयात्
अनुदिते जुहुयात्
अभ्युदिते जुहुयात् ५२

प्रात: सन्ध्यैव प्रधानरूपेण सन्ध्यात्वेन मन्यते । यतोहि तत्रैव समस्तजगतो जागरणस्य समयो भवति । यथा सूर्योपस्थानमन्त्रेषूक्तमस्ति :—

उदुत्यञ्जातवेदसं देवं वहन्ति केतव: ।
दृशे विश्वाय सूर्यं, चित्रं देवानामुदगादनीकम् ।
चक्षुर्मित्रस्य वरुणस्याग्ने: । आ प्रा द्यावापृथिवीमन्तरिक्षं
द्यौ । ५३

---

५१. शारदातिलके पदार्थादर्शटीकायाम् पृ, ८१
५२. मनुस्मृत्याम् २ १५
उदितेऽनुदिते चैव समयाध्युषिते तथा ।
सर्वथा बर्तते यज्ञ इतीयं वैदिकी श्रुति: ।।
५३. नित्यकर्मविधौ सूर्योपस्थानमन्त्रा: पृ. ४३

इत्येतस्मिन्सूक्ते सर्वोत्थापनात् प्रातः सन्ध्यायां त्रिविधहोमस्य-विधानमस्ति। तत्र कस्य किं विधेयमस्ति? मनुना स्वकीयस्मृत्यां द्वितीयेऽध्याये धर्मलक्षणप्रतिपादनप्रसङ्गे निर्णीतमस्ति। यथा :—

वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।
एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम् ॥ ५४

त्रिषु विधिषु येन यो विधिः स्वीकृतः स एव सर्वदा स्वीकर्तव्यो न समयः परिवर्तितव्यः। परिवर्तने दोषो भवति। मध्याह्नसमये सायङ्कालेऽपि च हवनं विधीयते, सन्ध्या च क्रियते। परन्तत्रत्यानां तेषां सामान्यता वर्तते। नित्यकर्मणां विच्छेदो न भवति, प्रत्यवायात्। काम्यकर्मणान्तु समयोऽपि भवति. अशौचादिकमपि परिगण्यते। तेषाङ्कालोऽपि निर्दिश्यते। यथा—

वसन्तश्चैव पूर्वाह्ने, मध्याह्ने ग्रीष्म उच्यते।
अपराह्ने भवेद्वर्षा शरच्चैवार्द्धरात्रिके।
उषो हेमन्तकश्चैव सन्ध्यायां शैशिरः स्मृतः। ५५

एवं समयन्निर्दिश्य तेषाङ्कुण्डमण्डपानां गृहाद् दिगभागस्यापि निर्देशो लभ्यते। यथा कुण्डमण्डपसिद्धिटीकायामपि निर्दिष्टमस्ति. वास्तुशास्त्रस्याभिधानङ्गृहीत्वा :—

गृहस्योत्तरपूर्वेण प्रागुदक् प्रवणाङ्गणे।
देवता सन्निधौ वापि पुण्यदेशे जलाशये॥
सुसमे भूमिभागे च कृत्वा हेरम्बपूजनम्।
मण्डपं स्थापयेत्तत्र चतुरस्रमुदक्प्लवम्। ५६

एवं पूर्वदेशकालादिगुणविशिष्टो यज्ञो यज्ञकर्त्रे फलदायी भवति। यज्ञेन न कर्तुरेव लाभोऽपितु "यज्ञोऽपि तस्यै जनतायै कल्पते, यत्रैवं विद्वान् होता भवति।" ५७

———

५४. मनुस्मृत्याम् २, १२
५५. मन्त्रमहार्णवे १, १, १, १६८
५६. कुण्डमण्डपसिद्धौ १६
५७. ऐतरेयब्राह्मणे १, २,

अस्यार्थङ् कुर्वन्महर्षिदयानन्दोऽप्याह 'जनानां समूहो जनता, तत्सुखायैव यज्ञो भवति, यस्मिन्यज्ञेऽमुना प्रकारेण, विद्वान् संस्कृतद्रव्याणामग्नौ होमङ्करोति। कुतः, तस्य परार्थत्वात्। यज्ञः परोपकारायैव भवति। अत एव फलश्रुतिः श्रवणमर्थवादोऽनर्थवारणायभवति। तथैव होमक्रियार्थानां द्रव्याणां पुरुषाणाञ्च यः संस्कारो भवति, स एव ऋतुधर्मो बोध्यः" इति। ५८

यज्ञस्य जगज्जीवकर्तृत्वमपि प्रसिद्धम्। यथा:

"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः, आकाशाद्वायुः, वायोरग्निः अग्नेरापः, अद्भ्यः पृथिवी, पृथिव्या ओषधयः, ओषधिभ्योऽन्नम्, अन्नाद्रेतः, रेतसः पुरुषः, स वा एष पुरुषोऽन्नमयः ५९

पुनश्च "स तपोऽतप्यत, तपस्तप्त्वा, अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति. अन्नं प्रयन्त्यभिसंविशन्ति।"

"अन्नं ब्रह्मेत्युच्यते, जीवनस्य बृहद्हेतुत्वात्। शुद्धान्नजलवाय्वादित्यद्वारैव प्राणिनां सुखं भवति नातोऽन्यथेति" ६० इति महर्षिदयानन्दोऽपि यज्ञस्य सर्वकर्तृत्वमभिमन्यते। तथैव श्रीमद्भगवद्गीतायामपि कथितम्:—

अन्नाद्भवन्ति भूतानि, पर्जन्यादन्नसम्भवः।
यज्ञाद्भवति पर्जन्यः, यज्ञः कर्मसमुद्भवः। ६१

इत्थं यज्ञस्य सर्वसृष्टिकारणत्वं स्वीक्रियते। तदेव स्वामी प्रेमनाथतीर्थः प्राह :-

यज्ञेषु देवास्तिष्ठन्ति यज्ञे सर्वं प्रतिष्ठितम्।
यज्ञेन ध्रियते पृथिवी यज्ञस्तारयति प्रजाः॥

———

५८. ऋग्वेदादि भाष्य भूमिकायाम् पृ. ५४

५९. तैत्तिरीयोपनिषदि-आनन्दवल्ल्यां प्रथमोऽनुवाकः

६०. ऋग्वेदादिभाष्यभूमिकायाम् पृ. ५६

६१. श्रीमद्भगवद्गीतायाम् ३, १४

अन्नेन भूतानि जीवन्ति पर्जन्यादन्न सम्भवः ।
पर्जन्यो जायते यज्ञात्सर्वं यज्ञमयं ततः ॥ ६२

अतोऽण्डब्रह्माण्डयोरन्तराले यत्किमपि भूयते तत्सर्वं यज्ञमयमेव दृश्यते। प्रतिदिनमसंख्यजीवैः श्वासप्रश्वासरूपेण हंसगायत्र्या यदुपासनङ्क्रियते, जीवनञ्च ध्रियते, तदपि यज्ञमेवास्ति। तथैव सूर्यस्योदयः, चन्द्रस्य विकासह्रासौ, क्षित्योत्पादनादिकमृतुपरिवर्तनञ्च, रात्रिदिवसो· र्व्यापारश्च तत्सर्वं यज्ञमयमेव कार्यं दृश्यते। ब्रह्मण एकत्वानेकत्वजिज्ञासेऽपि यज्ञमयमेव कार्यम्।

पुनर्यज्ञः पुरुषमेधो नृमेधश्चेति भेदाभ्यां द्विधा जायते। तत्र पुरुषमेधस्य प्रतीकं पुरुषसूक्तः। यत्रैकस्य पुरुषस्य प्रकृत्यात्मके सहस्रलक्षितेऽसंख्ये दृश्यमाने जगत्येकत्वभावना प्रदर्श्यते। तस्य पुरुषमेधस्यैव त्रित्वञ्जायते। हुतोऽहुतो हुताहुतश्चेति। तत्र वाह्यक्रियाबहुलानुष्ठानयज्ञरूपद्रव्यात्मकम्। तत्र पुरोडाशादिद्रव्ये स्वात्मस्वत्वं विहाय विश्वात्मकदेवेभ्य आहुत्यास्त्यागं क्रियते।

ध्यानमूलकस्य मानसिकक्रियाप्रधानस्य कर्मणो नाम जपयज्ञो भवति अयमेव भावनात्मको यज्ञः। हुताहुतयज्ञस्य स्वरूपमुभयात्मकम्भवति। द्रव्यात्मकमानसिकरूपयो मिश्रमर्धनारीश्वरस्वरूपात्मकञ्चेति। पुनरस्यैव भेदान् विविक्षुराह :—

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्।
होमो दैववलिभूतो नृयज्ञोऽतिथिपूजनम् ॥ ६३

नरमेधस्येव प्राशितयज्ञोऽपि नामान्तरम्। यस्य विवेचनं वास्तविकरूपेण गायत्रीमन्त्रेऽस्ति। स्थूलात्सूक्ष्मं प्रति जिगमिषवो याज्ञिकां पृथिव्यन्तरिक्षस्वर्गलोकानामेकत्रशरीरे भावनां विधाय पुनः स्थूलाभ्यन्तरे सूक्ष्मं सूक्ष्माभ्यन्तरे कारणशरीरं विज्ञाय तत्रत्य देवानामपि त्रित्वमनुभवन्ति। अतो यास्कोऽपि निजगाद :—

---

६२. यज्ञतत्त्वे-मङ्गलाचरणम्

६३. यज्ञतत्त्वे पृ. ७१

"तास्त्रिविद्या ऋचः । परोक्षकृताः, प्रत्यक्षकृताः, आध्यात्मिकाश्च"।६४ तिस्र एव देवता इति नैरुक्ताः । अग्निः पृथिवी स्थानः, वायुर्वेन्द्रो वान्तरिक्षस्थानः, सूर्यो द्युस्थानः । महाभाग्याद् देवताया एक आत्मा वहुधा स्तूयते । इत्थमेव यज्ञानां विवरणं ददन् मनुरप्याह :-

विधियज्ञाज्जपयज्ञो विशिष्ठो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः, साहस्रः मानसः स्मृतः ।। ६५
ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्वे ते जपयज्ञस्य कलान्नार्हन्ति षोडशीम् । ६६

एकाक्षरं परं ब्रह्म प्राणायामाः परं तपः ।
सावित्र्यास्तु परन्नास्ति मौनात्सत्यं विशिष्यते ।। ६७

एतादृशाणां यज्ञानान्तदेव साफल्यम्भवति यद्येषां विधिपूर्वकमनुष्ठानम्भवेत् । विधिपूर्वकायानुष्ठानाय कुण्डमण्डपयोर्निर्माणःतेषां प्रमाणादिसहितञ्च करणमावश्यकम्भवति । अतो यथा चतुर्ष्वाश्रमेषु ब्रह्मचर्याश्रमस्यान्येषामाधारत्वेन प्राधान्यम् । यथा गृहस्याधारस्थितप्रस्तराणाम्महत्वम् । यथा गुरुषु मातृणामाधिक्यं वरीवर्ति, तथैव यज्ञानामाधारत्वेन कुण्डमण्डपानामपि महिमा महीयते ।

---

६४. निरुक्ते ७ पृ. ३२६ एवं ३३६

६५. मनुस्मृत्याम् २, ८५

६६. तत्रैव २, ८६

६७. मनुस्मृत्याम् २, ८३



## चतुर्थोऽध्याय :-

# शुल्वसूत्रप्रतिपादितानाङ्कुण्डानाम्वेदिकानाञ्च विविधा आकारा, निर्माणप्रकाराश्च

समुपलब्धशुल्वसूत्रेषु प्रमुखतमम्बौधायनशुल्वसूत्रमस्ति। तत्रत्या-दिमं सूत्रमस्ति "अथेमेऽग्निचयाः" इति। ६८

अस्य सूत्रस्य व्याख्याङ्कुर्वन् श्री व्यङ्कटेश्वरदीक्षितोऽप्याह- "अग्नीनां श्येनाद्याकारविशिष्टस्थण्डिलविशेषाणाञ्चयाश्चयनप्रकाराः प्रशंस्यन्त इति शेषः।" द्वारकानाथयज्वा च कथयति "अथ गृह्यान्त-रम्। अग्निचयग्रहणं वेद्या अप्युपलक्षणार्थम्" इत्याह। 'समे शङ्कु-निखाय शङ्कुसम्मितया रज्ज्वा मण्डलं परिलिख्य......" इत्यादिकी कातीयशुल्वसूत्रेऽपि वेदिकायाश्चर्चा श्रूयते। ६९ तथास्यैव तृतीयकण्डि-कायां "चतुरस्राच्चतुरस्रं निर्जिहीर्षन्" इत्यादिषु सूत्रेषु वेदिकानाम-नेकप्रकाराणां वार्ता समक्षमायाति। "चतुरस्रमण्डलञ्चिकीर्षन् मध्या-त्कोट्यां निपातयेत्" "पार्श्वतः परिकृष्यातिशयतृतीयेन सह मण्डलं परिलिखेत्" ७० इत्यादिषु सूत्रेषु "चतुरस्रसमं द्वैधं कृत्वा भागान्तरो-परि। क्षिप्ते भागान्तरे दीर्घचतुरस्रं तु तद् भवेत्। ७१ इति करविन्दी-यव्याख्यायामपि च कुण्डमण्डपविषये प्रतिपादितम्। तत्र शुल्वम् = मापरज्जुः। यया भूमिं परिमाप्य यत्रकुत्रचिद्यज्ञे कुण्डमण्डपयो निर्माणङ्क्रियते। सा रज्जु शुल्वं भवति। वार्तमानिके समये पृथिवीमापकविभागे 'बन्दो-बस्तेत्याख्ये" जरेब शब्देन सैव व्यवह्रियते। तदैव कुण्डमण्डपसिद्धावपि प्रत्यपादि। प्रथमञ्चतुरस्रकरणस्य विधिं प्रादर्शयन्नाह :—

---

६८. बौधायनशुल्वसूत्रे १

६९. कातीयशुल्वसूत्रे २

७०. आपस्तम्बशुल्वसूत्रे तृतीयखण्डे पृ. ४९

७१ तत्रैव— पृ ४९

दिगन्तशङ्कुद्वयकं द्विपाशं विस्तारतुल्यन्तु गुणं दलाङ्के । ७२
कोणे प्रकर्षे दितिवेदकोणेष्वेवञ्चतुष्कोणमतीव साधु ॥

अर्थाद् वृत्ताच्चतुरस्रनिर्माणाय, षोडशहस्तपरिमाणरज्जौ शङ्कुनियोजयेत् । पुनश्चतुर्दिक्षु तस्याकर्षणङ्कृत्वा चतुष्कोण निर्मापयेत् । अस्य मण्डपस्य परिमाणविषयेऽपि विभिन्नानि मतानि सन्ति । तदपि तस्याभिमुख्येनेमे भेदाः सन्ति । यथा—

कनीयान्दशहस्तः स्यान्मध्यमो द्वादशोनमितः ।
तथा षोडशभिर्हस्तैर्मण्डपं स्यादिहोत्तमम् । ७३

दशद्वादशहस्तौ च द्विद्विवृद्धिगतः क्रमात् ।
विंशद्धस्तप्रमाणेन मण्डपकूटमेव वा ।।
तथाष्टादशहस्तेन कलाहस्तेन वा पुनः । ७४

एवञ्चतुर्विंशद्हस्तपर्यंतं मण्डपवृद्धि र्वास्तुशास्त्रे प्रदर्शिता । तथा च पञ्चहस्तमारभ्य द्वात्रिंशद् हस्तपर्यन्तं वृद्धिः शैवसिद्धान्तशेखरे प्रदर्शिता वर्तते । पुनश्चान्यन्मदनरत्ने वर्णानुसारं यज्ञमण्डपस्य विधानं विधीयते । यथा —

विप्राणां विंशतिर्हस्तो मण्डपस्तु सुशोभनः ।
कलाहस्तः क्षत्रियाणां वैश्यानां मीनहस्तकः । ७५

दिङ्निर्देशोऽपि प्राप्यते । यथा —

विप्राणां मण्डपः प्राच्यां राज्ञामीशानकोणतः ।
विशामुदीच्यां शूद्राणां प्रतीच्यां शस्त ईरितः । ७६

---

७२. कुण्डमण्डपसिद्धौ. १४ श्लो. पृ. ६
७३. लिङ्गपुराणे १, १५ पृ. ६
७४ मंत्रमुक्तावल्याम् १, ५१
७५. मदनरत्ने १, ५५
७६. वास्तुशास्त्रे १, १०३

एवं वर्णानुसारं मण्डपस्य दिङ् निर्देशानन्तरस्य निर्माणस्योल्लेखोऽप्युपलभ्यते । यथा :—

वैष्णवो मण्डपः प्राच्यां शैव ईशानकोणतः ।
शाक्तः प्रतीच्यां कौवेर्य्यामितरेषां सुपर्वणम् ।। ७७

तदैव कुण्डमण्डपसिद्धिकारेणापि मण्डपस्य विषये व्यलेखि :—

उच्चां भूमिं मण्डपस्य प्रकुर्याद् हस्तोन्मानामर्द्धहस्तोन्मितां वा ।
मध्ये भूमिं मण्डपेनोन्मिता च त्यक्त्वा कुर्यान्मण्डपश्चेद्द्वितीयः । ७८

"दशसूर्यकरोन्मितोऽधमः स्याद्दिनशक्रमितश्च करैस्तु मध्यमः,
धृतिभूपकरोन्मितो वरीयान्नखहस्तो ऽप्यथ मण्डपस्तुलायाम् ।" ७९

एतादृशोऽयम्मण्डपः कुत्र कर्तव्य ? इति जिज्ञासित उत्तरयति :—

गृहस्योत्तरपूर्वेण प्रागुदक् प्रवणाङ्गणे ।
देवता सन्निधौ वाऽपि पुण्यदेशे जलाशये ।।

सुसमे भूमिभागे च कृत्वा हेरम्बपूजनम् ।
मण्डपं स्थापयेत्तत्र चतुरस्रमुदकप्लवम् ।। ८०

तस्माद् यज्ञमण्डपकरणात्पूर्वं भूम्याः परीक्षादिकमप्यपेक्षते तदैव प्रतिष्ठामहोदधावप्याह :—

"ज्ञात्वा पूर्वं धरित्रीं दहन-खनन संप्लावनैः संविशोध्य । पश्चात्कृत्वा समानां मुकुरजठरवद्वाचयित्वा द्विजेन्द्रैः । पुण्याहं कूर्मशेषौ क्षितिमपि कुसुमाद्यैः समाराध्य, शुद्धे वारे तिथ्याञ्च कुर्यात्सुरपतिः ककुभ् साधनं कुण्डमण्डपार्थम् ।" ८१

———

७७. तत्रैव १, ११२

७८. कुण्डमण्डपसिद्धौ १५ श्लो.

७९. तत्रैव १६ ,,

८०. वास्तुशास्त्रे ३७ श्लो.

८१. प्रतिष्ठामहोदधौ कुण्डमण्डपप्रकरणे—३ श्लो.

इत्थम्मण्डपस्य निर्माणस्य प्रकारं प्रदर्श्य, तस्मिन्मण्डपे चतुर्दिक्षु द्वाराण्यपि स्युः। एभि र्यजमानः सपत्नीकः स्वेच्छानुसारं प्रविशेत् :—

कनिष्ठं द्विकरं द्वारञ्चतुरंगुलवृद्धितः ।
मध्यमोत्तमयोर्वेदी मण्डपस्य त्रिभागतः ।। ८२

महादानेषु तुलादानस्य प्रकरणे किमपि वैशिष्ट्यं प्रदर्श्यते । यथाः-

तुलाप्रदानेऽधममध्यमयोः स्यात्सा पञ्चहस्तोत्तमकेऽद्रिहस्ता ।
ईशानभागे ग्रहवेदिका तु हस्तोन्मितोच्छ्रायवती त्रिवप्रा ।।

आग्नेयां योगिनी वेदी वास्तुवेदीं तु नैऋते ।
वायव्ये क्षेत्रपालानां, ईशाने ग्रहवेदिका ।। ८३

अर्थात् तुलादानमण्डपे मध्यवेदी विशिष्टा भवति । तत्राधममध्यममण्डपयोर्मध्ये पञ्चहस्तस्य मध्यवेदी भवति । उत्तममण्डपे सप्तहस्तानाम्मध्यवेदी निर्मीयते । तस्या उच्चता हस्तपरिमिता भवितव्या वेदीनां भेदान् प्रदर्शयन्कथयति :—

वेदी चतुर्विधा प्रोक्ता चतुरस्त्रञ्च पद्मिनी ।
श्रीधरी सर्वतोभद्रा दीक्षासु स्थापनादिषु ।

चतुरस्रा चतुष्कोणा वेदी सर्वफलप्रदा ।
तडागादि प्रतिष्ठायां पद्मिनी पद्मसन्निभा ।।

राज्ञां स्यात्सर्वतोभद्रा चतुर्भद्राभिषेचने ।
विवाहे श्रीधरी वेदी विंशत्यस्रसमन्विता ।।
दर्पणोदरसङ्काशा, निम्नोन्नत विवर्जिता ८४

एवं शुल्वसूत्राणामनुसारेणानेकत्र वेदीनां नानात्वं विलोक्यते । प्रधानेषु शुल्वसूत्रेषु निम्नाङ्कितवेदीनामेव सूत्राणि प्राप्यन्ते यथा :—

---

८२. पञ्चरात्रे १. १५

८३. कुण्डमण्डपसिद्धौ-१८ श्लो.

८४. कर्मकाण्डप्रदीपे द्वितीयेभागे वेदिप्रकरणे ६

१ दार्शिकवेदिविहरणम्

"यजमानमात्री प्राच्यपरिमिता वा यथासन्नानि हवींषि सम्भवेदेवं तिरश्चीप्राञ्ची वेद्यन्तावुन्नयति। प्रतीची श्रोणी पुरस्तादंहीयसी पश्चात्प्रथीयसी मध्ये सन्नततरेवमिव हि योषेति दार्शिक्या वेदेर्विज्ञायते। ८५

२ सौमिकवेदिविहरणम्:-

"त्रिंशत्पदानि प्रक्रमा वा पश्चात्तिरश्ची भवति। षट्त्रिंशत्प्राची चतुर्विंशतिः पुरस्तात्तिरश्चीति सौमिक्या वेदेर्विज्ञायते।" ८६

३ महावेदिविहरणम्:-

"अष्टाविंशत्यूनं पदसहस्रं महावेदिः" ८७

४ सौत्रामणिवेदिविधि:-

"सौमिक्या वेदेर्वितृतीयदेशे यजेतेति सौत्रामण्यावेदेर्विज्ञायते। श्रीणि चतुर्विंशानि पदशतानि सौत्रामणिकी वेदिः।" ८८

५ आश्वमेधिकवेदिविधि:-

"द्विस्ता वा वेदिर्भवतीत्यश्वमेधे विज्ञायते।" ८९

६ निरूढपशुबन्धवेदिविधि:-

"रथमात्री निरूढपशुबन्धस्य वेदिर्भवतीति विज्ञायते।" ९०

७ सौमिकोत्तरवेदिविधि:-

---

८५. आपस्तम्बशुल्वसूत्रे २. ५
८६. आपस्तम्बशुल्वसूत्रे ५, १ पृ. ७५
८७. तत्रैव
८८. ,, पृ. ८५
८९. ,, पृ. ८६
९०. ,, पृ. ९२

"दशपदोत्तरा वेदिर्भवतीति सोमे विज्ञायते।" ९१

एता एव सप्तवेदिका: प्रधान्येन प्रतिपादिता:। बौधायनशुल्व सूत्रेऽप्य भिमुख्येन सप्तानामेव वेदिकानां वर्णनमस्ति। ये केचनान्यभेदा दृश्यन्ते त एतेषामेवोहापोहा वर्तन्ते। कातीयशुल्वसूत्रे तु केवलं पूर्वापरानयनस्य प्रकारा लभ्यन्ते। वेदिकानान्निर्माणे प्रथमं पूर्वदिग्भागस्य साधनङ्क्रियते। यतोहि कात्यायनश्रौतसूत्र उक्तमस्ति "व्याममात्रीं पश्चात् त्र्यरत्नि प्राचीमिति।" ९२ तत्र कातीयशुल्वसूत्रस्य कर्कभाष्यस्यादिम: श्लोक: –

स जयत्युदयेनैषाञ्चतसृष्वपि दिक्षु निवसतान्नृणाम्।
मेरो: प्रतिदिनमन्यामाशां विदधाति य: प्राचीम्॥ ९३

प्राचीज्ञानोपायाश्च ज्ञाप्यन्ते। यथा :—

"कृत्तिका: खल्विमा: प्राचीं दिशं न परिजह्याति, श्रोणासन्दर्शनेन मापयेदित्येतदेकम्। चित्रास्वात्योरन्तरालेन मापयेदित्येतदपरमिति।" ९४ सर्वदेशसाधारण: कात्यायनोऽप्याह यथा:—

"समे शङ्कुनिखाय शङ्कुसम्मितया रज्ज्वा मण्डलं परिलिख्य यत्र लेखयो: शङ्कुग्रच्छाया निपतति सा प्राचीति।" तदैव सूर्यसिद्धान्तेऽपि 'विषुवच्छाययाऽभ्यस्ताद् विक्षेपाद् द्वादशोधृतात्। ९५ विषुवन्नाममेषतुलयोरुपरि स्थितसूर्यस्य काल:। अर्थाद् वैशाखे मासे सूर्यो मेषस्थो भवति। तुलास्थ: सूर्य: कार्तिक मासे भवति। अनया द्वयोर्मानयो: समय एव, सूर्य: प्राच्यामुदेति। अन्यमासेषु पूर्वानयनस्य, वालिक्षायवादिमानक्रमेणोत्तरदक्षिणयो र्ह्रीयते। तदैव प्राच्यानयनं भवति। रात्रौ कृतिकास्वात्योर्दर्शनङ्कृत्वा अथवा ध्रुवसप्तर्षीणां दर्शन विधाय दिक्साधनं विदध्यात्।

---

९१. तत्रैव पृ. ९८

९२. कात्यायनश्रौतसूत्रे २, ६, १

९३. कातीयशुल्वसूत्रे कर्कभाष्य पृ. २

९४. बौधायनश्रौतसूत्रे कर्मान्ते २५ ५ पृ. २३३

९५ सूर्यसिद्धान्ते ग्रहयुत्याधिकारे ८, पृ. १९५

प्राचीसाधनानन्तरमभीष्ट परिमाणवेदिसाधनार्थं, प्रथमं परिसमुह्योपलिप्योल्लिख्यार्थाद् रेखाकरणं विधाय "चतुरस्रं चिकीर्षन् यावच्चिकीर्षेत्तावतीं रज्जुमुभयतः पाशां कृत्वा मध्ये लक्षणङ्करोति" ९६ इत्थम्मण्डलङ्गोलाकारङ् कृत्वा "दीर्घचतुरस्रञ्चिकीर्षन् यावच्चिकीर्षेत्तावत्या भूमौ द्वौ शङ्कूनिहन्याद्" ९७ इत्यादिना दीर्घचतुरस्रङ् कृत्वा पुनरणिमच्चतुरस्रमपि कर्तुं शक्यते । द्विकरणानयनं, त्रिकरणानयनञ्चतुरस्रस्य मण्डलाकरणं, प्रउगकरणमुत्करस्थानानयनं, सदसो विहरणञ्चैतत्सर्वं शुल्वसूत्रेषु सम्पादितमस्ति विस्तरभयान्नात्र सर्वं प्रपञ्च्यते ।

कुण्डानामपि तेषु सर्वत्रोभयात्मकदर्शपौर्णमाससोमयागयो मध्याद्यन्यत्रापि करणाय वेदिभिः सहैव विधानं दीयते । यथा – "कुण्डे वा स्थण्डिले वेति ९८ तत्र कुण्ड प्रकारं प्रदर्शयता शारदातिलककृतोक्तम् :—

क्षेत्रं विभज्य मध्यांशे पूर्वादिपरिकल्पयेत् ।
अष्टास्वाशासु कुण्डानि रम्याकाराण्यनुक्रमात ।।
चतुरस्रं योनिमर्धचन्द्रं त्र्यस्रं सुवर्तुलम् ।
षडस्रं पङ्कजाकारमष्टास्रं तानि नामतः ।।
आचार्यकुण्डं मध्ये स्याद्गौरीपतिमहेन्द्रयोः ।
हस्तमानमितां भूमिं पूर्ववत्परिकल्पयेत् ।
समन्तात्कुण्डमेतस्याच्चतुरस्रं शुभावहम् । ९९

तेषामेव विवेचनङ्कुण्डमण्डपसिद्धावपि नवकुण्डीपक्षे विध्रीयते । यथा :—

प्राच्याश्चतुष्कोणभगेन्दुखण्डत्रिकोणवृत्ताङ्ग भुजाम्बुजानि ।
अष्टांस्त्रिशक्रेश्वयोऽस्तु मध्ये वेदास्त्रि वा वृत्तमुशन्ति कुण्डम् । १००

---

९६. बौधायनशुल्वसूत्रे १. २० पृ. १०
९७. तत्रैव १. १ पृ. ११
९८. पारस्करगृह्यसूत्रभाष्ये पृ. १७
९९. शारदातिलके २, ४८-५१
१००. कुण्डमण्डपसिद्धौ ३१

पञ्चकुण्डीपक्षेऽथवैककुण्डीपक्षे सर्वथैवमुच्यते :-

अशेषकुण्डैरिह पञ्चकुण्डी चैकं यदा पश्चिमसोमशैवे ।
वेद्यं सपादेन करेण यद्वा पादान्तरेणाखिल कुण्डसंस्था ।। १०१

अर्थादेककुण्डपक्षे तस्य निर्माणं मध्यवेदितः पश्चिमभाग-उत्तर-भाग-ईशान कोणे वाऽपेक्षते ।

वर्णानुसारमपि कुण्डानान्निर्माणान्निर्दिश्यते यथा-

विप्राच्छुत्यस्रञ्च वृत्तञ्च वृत्तर्द्धम्,
त्र्यस्रि स्याद् वेदकोणानि वापि ।
सर्वाण्याहु र्वृत्तरूपाणि चान्ये,
योन्याकाराण्यङ्गनानान्तु तानि । १०२

कस्मिन्कुण्डे हवनस्य किं फलं भवतीत्येतस्यापि निर्देशः प्राप्यते । यथा मन्त्रमहार्णवस्य प्रथमखण्डे प्रतिपादितम् ।

सिद्धिः पुत्राः शुभं शत्रुनाशः शान्तिमतिच्छिदे ।
बृष्टिरारोग्यमुक्तं हि फलं प्राच्यादिकुण्डके ।। १०३

होमप्रमाणेनापि कुण्डप्रमाणान्युच्यन्ते। यथा :—

मुष्टिमात्रमित कुण्डं शतार्द्धे संप्रचक्षते ।
शतहोमेरत्निमात्र हस्तमात्रं सहस्रके ।
द्विहस्तमयुते लक्षे चतुर्हस्तमुदीरितम् ।
दशलक्षे तु षड्हस्त कोट्यामष्टकरं स्मृतम् ।।
मानहीनाधिकं कुण्डमनेकभयदं भवेत् ।। १०४

कुण्डस्याङ्गान्यपि वर्णितानि --

कुण्डरूपन्तु जानीयात् परं प्रकृतेर्वपुः ।
प्राच्यां शिरः समाख्यातं बाहू दक्षिणसौम्ययोः ।।
उदरं कुण्डमित्युक्तं योनिः पादौ तु पश्चिमे १०५

---

१०१. प्रतिष्ठामहोदधौ–कुण्डप्रकरणम् पृ. ६
१०२. कुण्डमण्डपसिद्धौ, ३३
१०३ मन्त्रमहार्णवे प्रथमखण्डे २०७
१०४. तत्रैव २०८–२०९
१०५. तत्रैव २१०

कुण्डप्रमाणानुसारं मेखलानां प्रमाणमपि ग्रन्थेषूपलभ्यते :—

कुण्डवन्मेखलां कृत्वा योनिं कृत्वा ततः परम् ।
कुण्डानां यादृशं रूपं मेखलानान्तु तादृशम् ।
कुण्डानां मेखलास्तिस्रो मुष्टिमात्रे तु ताः क्रमात् ।
उत्सेधायामतो ज्ञेया कण्ठार्द्धगलसंमिता ॥
अरत्नि मात्रे कुण्डे स्युस्तास्त्रिद्वयेकाङ्गुलात्मकाः ।
एकहस्तमिते कुण्डे वेदोऽग्निनयनाङ्गुलाः । १०६

मेखलानां भवेदन्तः परितो नेमिरङ्गुलात् ।
एकहस्तस्य कुण्डस्य वर्द्धयेत्तत्क्रमात्सुधीः ॥
दशहस्तान्तमन्येषामर्द्धाङ्गुलवशात्पृथक् ।
कुण्डे द्विहस्ते ता ज्ञेया रस-वेद-गुणाङ्गुलाः ॥
चतुर्हस्तेषु कुण्डेषु वसुतर्कयुगाङ्गुलाः ।
कुण्डे रसकरे ताः स्युर्दशाष्टत्त्वंगुलान्विताः ॥
वसुहस्तमिते कुण्डे भानुपंक्त्यष्टान्विताः ।
दशहस्तमिते कुण्डे मनु-भानुदशाङ्गुलाः ॥
विस्तारोत्सेधतो ज्ञेया मेखला सर्वतो बुधैः । १०६

कुण्डाङ्गेषु योन्याङ्गस्यापि प्रधानता दृश्यते । तस्याः प्रमाण-विषयेऽपि ग्रन्थेषूल्लेखः—

होतुरग्रे योनिरासामुपर्यश्वत्थपत्रवत् ।
मुष्टयारत्नेकहस्तानाङ्कुण्डानां योनिरीरिता ॥
षट्-चतुर्द्व्यङ्गुलायाम विस्तारोन्नतिशालिनी ।
एकाङ्गुलन्तु योन्यग्रं कुर्यादीषदधोमुखम् ।
एकैकाङ्गुलितो योनिं कुण्डेष्वन्येषु वर्द्धयेत् ।
यवद्वयक्रमेणैव योन्यग्रमपि वर्द्धयेत् ।
स्थलादारभ्य नालं स्याद्योन्या मध्यं सरन्ध्रकम् ॥
नार्पयेत्कुण्डकोणेषु योनिन्तान्तत्र वित्तमः ॥ १०७

---

१०६. मन्त्रमहार्णवे प्रथमखण्डे १, १. २१०-२१६
१०७. ,, ,, १, १, २१७-२२०

योन्यङ्गे तस्या नाभिरप्येकमङ्गमस्ति। यस्य वर्णनमपि योन्या-
कारानुरूपमेव दीयते। यथा :—

कुण्डानाङ्कल्पयेदन्तर्नाभिमम्बुजसन्निभाम् ।
तत्तत्कुण्डानुरूपं वा मानमस्या निगद्यते ॥

मुष्टयरत्न्येकहस्तानां नाभिरुत्सेधतारतः ।
द्वित्रिवेदाङ्गुलोपेतां कुण्डेष्वन्येषु वर्द्धयेत् ॥

यवयवक्रमेणैव नाभि पृथगुदारधीः ।
योनिकुण्डे योजिमब्जकुण्डे नाभि विवर्जयेत् ॥

नाभिक्षेत्रं त्रिधा भित्वा मध्ये कुर्वीत कर्णिकाम् ।
बहिरंशद्वयेनाष्टौ पत्राणि परिकल्पयेत् ॥ १०८

योनिमेखलयोर्महत्वं प्रदर्शयता क्रियासारकृताऽप्याह :—

नाभियोनिसमायुक्तङ्कुण्डं श्रेष्ठं त्रिमेखलम् ।
कुण्डं द्विमेखलं मध्यं नीच स्यादेकमेखलम् ॥

लक्षणसंग्रहे कथितम् :—

मुख्यास्तु पञ्च ताः प्रोक्ता मध्यमस्तिस्र एव च ।
द्वे स्यातां मध्यमे पक्षे एकास्यात्त्वधमाधमेति ।

सोमशम्भुरपि कथयति -

त्रिमेखलं द्विजे कुण्डं क्षत्रियस्य द्विमेखलम् ।
मेखलैकन्तु वैश्यस्येति तदैव कुण्डमण्डप—

सिद्धिकारोप्युवाच :-

अधमा मेखलैका स्यान्मध्यमं मेखलाद्वयम् ।
श्रेष्ठास्तिस्रोऽथवा द्वित्रिपञ्चस्त्वधमतादिकम् । १०९

कुण्डानान्तदङ्गानाम्मेखलानाभियोनीनां निर्माणार्थङ्के-२ उपायाः
स्युरित्यधिकृत्य कुण्डमण्डपसिद्धावाह :-

---

१०८. तत्रैव २२३-२२४
१०९. कुण्डमण्डपसिद्धौ — ४९

खातं क्षत्रसमं प्राहुरन्ये तु मेखलां विना ।
कण्ठो निजांशमानः स्यादर्कांश इति चापरे ॥ ११०

यावान्कुण्डस्य विस्तारो भवेत् खननन्तावदीरितम् । तथा सिद्धान्तसंग्रहे :-

"खातकुण्डप्रमाणं स्याद् ऊर्ध्वं मेखलया सहे" त्यपि कथितमस्ति । कुण्डस्यायतनङ्कीदृग्भवेदिति चेत् ? तत्रोच्यते:-

सममेव सर्वम् । यथा–लम्बता+विस्तार: + निम्नता (१२ + १२ + १२) न तत्र न्यूनाधिक्यं विधेयम् । तादृशं कुण्डमेव यज्ञे यजमानाय सिद्धिदं भविष्यति

❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀❀

## पाठकाः प्रार्थ्यन्ते

मान्या: !

नववर्षारम्भो जात: नववर्ष शुल्क: प्रेष्य: । पत्रप्रेषणेनापि वार्षिकशुल्कप्रेषणार्थं प्रार्थना कृता किन्तु स्वल्पैरेव महानुभावै: शुल्कप्रेषणं कृतम् । अत: सविनयं प्रार्थ्यते यत् शीघ्रमेव शुल्कप्रेषणेन सहायता क्रियताम् ।

——सम्पादक:

★

११०. तत्रैव — ४८

## पञ्चमोऽध्याय :—

### कुण्डमण्डपानामध्यात्मिकसंसूचकत्वम् :

"यथा पिण्डे तथा ब्रह्माण्डे" इति न्यायेन, यदा यज्ञविषये विचिन्तयामः, तदा ऋग्वेदस्यास्मिन्पौरुषसूक्तिके मन्त्रे दृष्टिरापतति :—

यज्ञेन यज्ञमयजन्तदेवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्त यत्र पूर्वे साध्या सन्ति देवाः । १११

अर्थात् प्रजापतिप्राणरूपा देवाः, यज्ञसाधनभूतेन संकल्पेन, यज्ञरूपिणं पुरुषं, यस्य वर्णनं पूर्वं "सहस्रशीर्षा.......इत्यादिकैः पञ्चदशमन्त्रैः कृतन्तादग्व्यापकरूप विष्णुमजयन्त । तादृशः स विराट्पुरुषो बृहदारण्यकोपनिषदः प्रथमाध्यायस्य प्रथमब्राह्मणे वर्णितोऽस्ति । यथा :—

"ॐ उषा वा अश्वस्य मेध्यस्य शिरः । सूर्यश्चक्षु र्वातः प्राणो व्यात्तमग्निर्वैश्वानरः सम्वत्सर आत्माश्वस्य मेध्यस्य । द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तर दिशः, पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसानि । अवध्यं सिकता सिन्धवो गुदायकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्नित्यादि । ११२ तादृशे विराट्पुरुष येकोऽहम्बहु स्यामे" तीच्छात्मिकीमायाशक्तिः प्रकृतिरुदेति । तत्र बहुत्वविवक्षारूपा विद्याऽग्निस्फुलिङ्गवन्नानारूपान् जीवानुज्जीवयति । तदेव शतपथब्राह्मणे निगदितम्" "यज्ञो वै श्रेष्ठतमं कर्म" ११३ अस्यार्थोऽयमस्ति यज्जगति यानि श्रेष्ठतमानि कर्माणि, तानि यज्ञरूपाणि सन्ति, नान्यानि । तानि त्रिकात्मकानि । यथा :—

कर्मयज्ञो ज्ञानयज्ञ उपासनायज्ञश्चेति ।

---

१११. ऋग्वेदे १०. ९०, १६

११२. छान्दोग्योपनिषदि १, १, १,

११३. शतपथब्राह्मणे, १, ७, ४५

तत्र प्रथमे यज्ञे ऽर्थात्कर्मयज्ञे षोडशसंस्काराः, शिक्षा, आहाराः, वस्त्राणि, गृहाणि, समाजः, राज्यं कृषिः, पशुपालनं, सङ्गीतं, गणितं, भूगोलं, ज्यौतिषं, वैद्यकः, रसायनं, भवनं यन्त्रं, तन्त्रं, शस्त्रं, वाहनं, युद्धविद्याश्चायान्ति ।

ईश्वरः, जीवाः, पुनर्जन्म, कर्मफलं, सृष्टिः, प्रलयः, वर्णः, आश्रमाः, स्वाध्यायश्चेति ज्ञानयज्ञेन सम्बद्धाः सन्ति ।

सदाचारः, स्नेहः, दर्शनं, भक्तिः, वैराग्य, योगः, समाधिश्चेत्यादिकाः क्रिया उपासना यज्ञेन सम्बद्धाः सन्ति । ११४

अत्रैव तिसृषु विद्यासु वेदस्य लौकिकालौकिकपक्षस्य ज्ञानञ्चरितार्थं भवति । अधुना त्रिविधयज्ञेषु कर्मयज्ञस्य विशेषतो विवेचनं विधीयते ।

यद्यपि ब्राह्मणसूत्रादिग्रन्थेषु यज्ञानामनेके भेदा विविक्ता स्तथाप्यत्र बीजरूपेणाथर्ववेदस्य विभागः प्रदर्श्यते । यथा :—

राजसूयं वाजपेयमग्निष्टोमस्तदध्वरः ।
अर्काश्वमेधावुच्छिष्टे जीवबर्हिर्मदिन्तमः ॥
अग्न्याधेयमथो दीक्षा कामप्रश्छन्दसा सह ।
अग्निहोत्रं च श्रद्धा च वषट्कारो व्रतं तपः ।
चतुर्होतार आप्रियश्चातुर्मास्यानि नीविदः । ११५

राजसूयं, वाजपेयं, अग्निष्टोमः, अश्वमेधः अग्निहोत्रम् अग्न्याधानम्, चातुर्मास्यञ्चेति । एषां विवरणं गोपथब्राह्मण एवङ्कृतम् :—

"अथातो यज्ञक्रमाः । अग्न्याधेयमग्न्याधेयात्, पूर्णाहुतिः, पूर्णाहुतेरग्निहोत्रमग्निहोत्राद्, दर्शपूर्णमासौ दर्शपूर्णमासाभ्यामाग्राहायणमाग्राहायणाच्चातुर्मास्यानि, चातुर्मासेभ्यः पशुबन्ध, पशुबन्धादग्निष्टोमः, अग्निष्टोमाद्राजसूयो, राजसूयाद् वाजपेयः, वाजपेयादश्वमेधः अश्वमेधात्पुरुषमेधः, पुरुषमेधात्सर्वमेधः, सर्वमेधाद्दक्षिणावन्तो, दक्षिणा-

११४. वैदिकसम्पत्तो पृ. : ५०

११५. अथर्ववेदे ११७

वद्भ्योऽदक्षिणा, अदक्षिणाः सहस्रदक्षिणे प्रत्यतिष्ठन्ते। वा एते यज्ञक्रमाः। स य एवमेतान् यज्ञक्रमान् वेद यज्ञेन, स आत्मा सलोको भूत्वा देवानप्येतीति ब्राह्मणम्। ११६

पुनरेषां यज्ञानामेकैकशो वर्णनं दीयते। यथा :—

१. अग्नीन् आधाय पूर्णाहुत्या यजेत। ११७

२. अग्नये एव सायं सूर्याय प्रातः एव ह वै अग्निहोत्रं जुहोति। ११८

३. सुवर्गाय हि वै लोकाय दर्शपूर्णमासौ इज्येते। ११९

४ फाल्गुन्यां पौर्णमास्याञ्चातुर्मास्यानि प्रयुञ्जीत, मुखं वा एतत् सम्वत्सरस्य यत्फाल्गुनी पौर्णमासी। १२०

५. आग्रहायण यज्ञ उत्तरायणदक्षणायन काले च क्रियते।

६. एष वै ज्येष्ठो यज्ञानां यदग्निष्ठोमः (तस्माद् वसन्ते वसन्ते) ज्योतिष्ठोमेन यजेत। १२१

७. अथ यत्प्रजामिच्छते यत्पितृभ्यो निपृणाति। १२२
अस्यैव नाम पुत्रकामेष्टिरपि वर्तते।

८. पञ्च वै एते महायज्ञाः सतति प्रतायन्ते। १२३

९. राज्ञः एव सूयं कर्म। राजा वै राजसूयेन इष्ट्वा भवति। १२४

१०. राजा वै एषां यज्ञानां यद् अश्वमेधः। १२५
सर्वा वै देवताः अश्वमेधे अन्वयत्ताः। तस्माद् अश्वमेधयाजी सर्वदेशो अभिजयन्ति। १२६

———

११६. गोपथब्राह्मणे १, ५, ७

११७. तत्रैव ५, ५, ८

११८. शतपथब्राह्मणे २. २. ४, १७

११९. तैत्तिरीयसंहितायाम् २, २. ५

१२०. गोपथब्राह्मणे, ३, १, ११

१२१. ताण्ड्यब्राह्मणे, ६, ३, ८

१२२. शतपथब्राह्मणे ६, ७, ३, ७

१२३. तैत्तिरीयारण्यके २, १०

१२४. शतपथब्राह्मणे १३, २, २ १

१२५. तत्रैव १३. २, २, १

१२६. तत्रैव १०, १, २, ९

११. गोमेधयज्ञे पृथिव्या नवीनरूपेण निर्माणं, प्राच्या उर्वर्कीकरणं, तड़ागादि निर्माणमुच्यते ।

एवं क्रमशो यज्ञानां वर्णनं विधाय तेषाङ्करणस्यावश्यकता वर्तते । येन आरोग्यता, सन्तति— वर्षासम्पत्तिराज्यलाभेश्वरप्राप्तिस्वर्गप्राप्ति-मोक्षप्राप्तिरित्यादिकैः फलैः सहजतया कर्तॄणां संयोगो भवेत् । एवं विधानांक्कर्मयज्ञानां विवेचनङ् कृतमस्ति ।

उपासनायज्ञेषु सा भावना याति, याहुत्यन्ते प्रदर्श्यते । यद् न "इदन्ममेति ।" ययाहङ्कारो नश्यति । तदैव वास्तविकः क्रियायोगो जायते तदैव "न कर्म लिप्यते नरः" इतीशोपनिषत्प्रतिपादितसिद्धान्तः सफलायते । सोवोपासनेत्यपि भण्यते ।

ज्ञानयज्ञे तु वास्तविकरूपे पञ्चयज्ञा एव समायान्ति । एभि र्यज्ञकर्तुः सार्वत्रिकी दृष्टिर्जायते । "अहं सर्वेषु भूतेषु, मयि सर्वे च जन्तवः" इत्येवं रूपियध्वज्ञानस्योद्भावकाः पञ्चयज्ञाः सन्ति । वस्तुतः प्रथमं प्रजापतियज्ञ एव वर्तते । यस्य द्वौ भेदावग्निविद्या सम्वत्सरविद्या चेति । ययो र्नाम शक्तिविद्या कालतत्त्वविद्यापि च वर्तते । अनयोरुभयोः सम्मिलितरूपं यज्ञः । वस्तुतस्त्वग्निविद्या सर्वतोऽतिशायिन्यस्ति । तस्या एव प्रजापतिः, ब्रह्म, महाकालशक्ति-तत्त्वञ्चेत्यादीनि रूपाणि सन्ति । १२७

वास्तविकरूपेण स्वयम्भुयज्ञेन सह त्रिवेदाः सम्मिलिताः । अत्राजस्रहवनस्य प्रक्रिया चलति अयंप्र जापतिस्वात्मनि स्वात्मान-ञ्जुहोति । येन नूतनानामृग्यजुसाम्नामुत्पत्तिर्जायते । पुन स्त्रिवेधाः समुत्पत्तौ, तासां, तैः सार्धं संयुक्तो यज्ञ उत्पद्यते । यज्ञानामाश्रयः स्वयम्भूयज्ञोऽस्ति स्वयम्भूयज्ञस्याश्रयः परमेष्ठ्यस्ति तस्याधिष्ठातृत्वे-नेश्वरो वर्तते । अतो वेदत्रय्यपीश्वररूपा । तस्मादेव चराचरस्योत्प त्तिर्जायते यस्य वर्णनमृग्वेदीये पुरुषसूक्ते प्रस्तूयते । यत्र विराट्पुरुषस्य क्षररूपस्य वर्णनङ् क्रियते । पुनस्तस्यावयवै र्यज्ञः क्रियते तस्यवावयवा यज्ञकर्तारः स्युः अष्टमे मन्त्रे तस्माद् वेदानामुत्पत्ति र्निदर्शिता । १२८

---

१२७. वैदिकविज्ञान और भारतीयसंस्कृति पृ. ७

पं. गिरधर शर्मा चतुर्वेदी

१२८ तस्माद् यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे ।
छन्दांसि जज्ञिरे तस्माद्यजुस्तस्मादजायत । ऋग्वेदे १०. ९०. ८

यत्किमपि दृश्यते तत्सर्वं प्राणमयम् । प्राणानां प्रकाशकं मनः । वाक् प्राणाधारे निवसति अतः प्राणमनोवाचां सङ्कलनं प्रजापतिरूपं भवति । तत्र क॑ प्रजापतिरूपो यज्ञः ? तत्रोच्यते । मनसः प्राणेषु प्रवेशः, प्राणानां मनसि प्रवेशः तादृशमेव वाचा सहापि पारस्परिक सम्मिश्रणं यदि भवेत् तदेव गमनागमनप्रक्रियारूपो यज्ञः अत ऐतरेयमहर्षिराह –"वाचश्चित्तस्योत्तरोत्तरक्रमो यज्ञः" इति वाग्रूपा मन्त्रा यज्ञस्वरूपा एवाम्नाताः यथा :—

यज्ञेन वाचः पदवीयमायन्तामन्वविन्दन्नृषिषु प्रविष्टाम् । १२९

अतो यास्काचार्योऽप्याह निरुक्ते :-

"एवमुच्चावचैरभिप्रायै ऋषीणां मन्त्रदृष्टयो भवन्ति । ते मन्त्रा यज्ञरूपास्त्रिविधा आम्नाताः ।" १३०

"तास्त्रिविधा ऋचः परोक्षकृता, प्रत्यक्षकृताः, आध्यात्मिकश्च ।" १३१ एते मन्त्रा आधिदैविका, आधिभौतिका आध्यात्मिकाश्चेत्यपि वर्णिताः । द्युस्थानदेवतासम्बधिनो यज्ञाः परोक्षकृता भवन्ति । यथा द्युलोक आकाशेऽर्थाद् ब्रह्माण्डे दृश्यते, तथैव पिण्डेऽर्थाद् देहेऽप्यनुभूयते । त त्या यज्ञा एवाध्यात्मिका उच्यन्ते । यदोभयोः परोक्षाध्यात्मिकयोरसन्तुलनं भवेत् तदाधिभौतिकयज्ञस्यावश्यकता भवति, येनोभयो पूर्तिर्जायते । एष एव धर्माभिधानेनाप्यभिधीयते । तस्य लक्षणलिलिक्षुः कणादो जगाद — "यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" १३२ अभ्युदयस्य कारणं प्राणाश्रितक्रिया निःश्रेयस...-कारणञ्च ज्ञानसाधना । तदेव जैमिनिरप्यजञ्जपत् :-

"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति । १३३

---

१२९. ऋग्वेदे १०, ७१. ३

१३०. निरुक्ते, ७. १

१३१. तत्रैव ७ १

१३२ वैशेषिकदर्शने १, २

१३३. जैमिनिसूत्रे १, २, १

नैतावद्वेदस्य क्रियापरकत्वेन प्राणपरकत्वमसाधयदपितु "चोदना लक्षणोऽर्थो धर्म" १३४ रिति सूत्रे प्राणस्यैव धर्मत्वं संसाधयामास। प्राणस्यापानेऽपानस्य प्राणे सततमाहुतिर्दीयते, तदेव यज्ञो भवति।

यदा यज्ञ एव धर्मस्तदा तस्य स्वरूपस्य ज्ञानमनुष्ठानञ्चावश्यकमस्ति। तदेव सतत क्षीयमाणमिदं मानवजीवनं सफलं भविष्यति। एतस्मादेव महर्षिवेदव्यासोऽपि जगाद, 'धर्म एव हतो हन्ति, धर्मो रक्षति रक्षित" रिति। धर्मस्य परित्यागेनैव भारतीयानां पारतन्त्रे, दृश्यमाना दुर्दशा जाता। सहस्राणां वर्षाणां पारतन्त्र्यं समजनि, दुःखदारिद्र्यं समग्रदेशे व्याप्नोत्। राष्ट्रस्यापमानमप्यजायत। धर्मस्योपेक्षयैव सर्वमेतत्समभवत्। दुर्दशाया अपि पराकाष्ठा दृश्यते। इदानीमार्यप्रज्ञा यज्ञस्य नामापि न जानाति। यज्ञप्रक्रियायाः परित्यागं विधायासुरीभावनानां दास्यमङ्गीकृत्य, स्वजीवनं, स्वसंस्कृतिं, स्वसमाजं, स्वदेशञ्चाधोगर्ते निपात्य वार्तमानिका आर्या अनार्या एव जाताः। १३५

यज्ञस्य विस्मृतिसमयेऽहं तस्य स्वरूपजागरणाय, ग्रन्थावलम्बनपूर्वकं स्वरूपं विबोधुरस्मि। महर्षिकात्यायनः "अथ यज्ञं व्याख्यास्याम" इति प्रतिज्ञाय तस्य लक्षणमेवमाह "द्रव्यदेवता त्यागः" त्रिकमिदमेव यज्ञः १३६ स्मार्तोल्लासनामके ग्रन्थे द्रव्याणां विवेचनमित्थङ्क्रियते। यथा :—

तैलं दधि पयः सोमो यवागूरोधनं घृतम्।
तण्डुलाः फलमापश्च, दशद्रव्याण्यकामत;॥ १३७

देवताऽऽधिदैविकशक्तिरस्ति, या यज्ञं सर्वथा व्याप्नोति। अत एव निरुक्ते यास्काचार्याः प्राहु :—

"यत्काम ऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते-

———

१३४. जैमिनिसूत्रे १. १. २
१३५. संस्कृतिविशेषाङ्के मासिकपत्रकल्याणे पृ. ४६५
१३६. ,, ,, पृ. ४६६
१३७. तत्रैव पृ ४६६

तद्दैवतः त मन्त्रो भवतीति ।" १३८ ऋषीणां मन्त्रदृष्टयोऽपि नानाविधा भवितुमर्हन्ति । अतो मन्त्रेषु स्थाने-स्थाने दृश्यते । एते सर्वे पदार्था वस्तुतो देवतानां स्वरूपभूता एव । अतो यास्काचार्याणामियमुक्तिः—

"आत्मैवेषां रथो भवत्यात्मा अश्व आत्मायुधमात्मेषव आत्मा सर्वं देवस्य देवस्य" १३९ इत्थं देवतानां मन्त्रमयत्वमेवावलोक्यते । प्रत्यक्षरूपेण देवता मन्त्ररूपेणैवास्माकं समक्षे समायान्ति । ता अभिलक्ष्य स्वाहास्वधा वषट्कार रूपेणाग्नौ द्रव्यस्य त्यागः क्रियते । तादृशानां यज्ञानां संख्या यद्यपि वेदे महती वर्तते, तथापि विद्वद्भिः सौकर्यार्थं तेषां विभाग एवङ्कृत :-

'अग्निहोत्रं, दर्शपूर्णमासः चातुर्मास्यं, पशुयागः, सोमयागश्चेति कृतः । इत्थं यज्ञस्य पञ्चधा वर्णनं धर्मादिसूत्रेष्वपि लभ्यते । तेषामपरो विभागोऽपि दृश्यते । यथा सोमयागस्याश्वमेधो, नरमेधः, सर्वमेधः, एकाहोऽहीनयागश्चेति द्वाभ्यामारभ्यैकादशरात्रि यावद्येषां प्रचलनं भवेत्, तेऽहीनयागाः । त्रयोदशरात्रिभ्य आरभ्य सहस्रारात्रिपर्यन्त प्रचल्यमाना यागाः सत्राणि सन्ति । अतो गौतमसूत्रेऽप्युक्तम् :-

"औपासहोमो वैश्वदेवः, पार्वणोऽष्टका, मासिकश्राद्धं, श्रवणा, शूलगव इति सप्त पाकयज्ञसंस्थाः, अग्निहोत्रं, दशपौर्णमासावाग्रायणञ्चातुर्मास्यानि, निरूढपशुबन्धः, सौत्रामणि पिण्डपितृयज्ञादयो दर्विहोमा इति सप्त च सोमसंस्थाः । १४०

एवं पाकहविर्होमभेदेषु त्रिधा विभज्य, पुनस्त्रयाणां सप्तसप्तभेदाः क्रियन्ते । १४१ देनैकविंशतिर्यज्ञानां भेदा जायन्ते । वस्तुतस्तु यज्ञयुगस्य काल स्तादृशो विस्तृतो वर्तते; यदद्य तस्य समग्रज्ञानाय नास्ति किमपि साधनमस्माकं समक्षे । अतोऽसंख्यानां यज्ञानां परिगणनमपि न कर्तुं शक्नुमः । यज्ञानां युगोऽयं सुदीर्घकालपर्यन्तं भारते वर्षेऽभूत् अतो यज्ञस्याप्यसंख्यभेदाः सम्बभूवुः ।

———

१३८. निरुक्त ७ १, ४

१३९. तत्रैव ७, १७

१४० गौतमधर्मसूत्रे, ८-१८

१४१. आश्वलायनगृह्यसूत्रे १. २ त्रयः पाकयज्ञाः ।

प्रारम्भकाले—यज्ञानां पञ्चभेदा एवासन्। अतो यजुर्वेदस्य प्रथममन्त्रस्य विनियोगः, दर्शपौर्णमासयागस्य पलाशशाखाछेदनविधौ विधीयते। प्रथमद्वितीयाध्याययोर्मन्त्रा दर्शपौर्णमासयज्ञस्य विधिषु प्रयुज्यन्ते। प्राकृतिकरूपेणास्य स्वरूपत्वादादौ प्रयोगः। अस्मिन् यज्ञे प्रथमं व्रतोपायनविधिर्भवति यत्र यजमान स्तस्य पत्नी च संयमपूर्वकं रात्रि व्यतीतङ् कुर्यास्ताम्। अस्योपदेशः शतपथब्राह्मणे ॐ व्रतमुपैष्यन्" इत्येवं प्रदत्तः १४२ द्वितीयदिवसे यज्ञस्य सर्वाङ्गानुष्टानङ् क्रियते। अमावास्याया दिवसे त्रयो यागा भवन्ति। यथा —

१. अग्निदेवतायै पुरोडाशदानम्।
२. इन्द्राय दधिद्रव्यदानम्।
३. इन्द्रायैव पयोद्रव्यदानञ्च।

पौर्णमास्यां दिनेऽपि त्रयो यागा भवन्ति।

१. अग्निदेवतासम्बन्ध्यष्टकापालिकः पुरोडाशयागः।
२. अग्निषोमीयज्यद्रव्यात्मक उपांशुयागः।
३. अग्निषोमीय एकादशकपालात्मकः पुरोडाशयागः। १४३

एवं दर्शपौर्णमासयागे षड् यज्ञा भवन्ति। अस्य यज्ञस्योपकरणान्यधोनिर्दिष्टानि सन्ति : -

१. अग्न्युद्धरणं २. अग्न्यन्वाधानं, ३ व्राह्मवरणं, ४. प्रणिताप्रणयनं ५ परिस्तरणं, ६. पात्रासादनं, ७. शूर्पाग्निहोत्रहवनीनां प्रतपनं, ८. शकटाद्हविर्ग्रहणं, पवित्रीकरणं, १०. पात्रहविः प्रोक्षणं, ११. फलीकरणं, १२. कपालोपधानं १३. उपसर्जन्यधिश्रयणं, १४. वेदिकरणं, १५. स्तंबयजुर्हरणं (मन्त्रैर्दर्भछिन्नीकरण) १६ स्रुवादियज्ञपात्राणां १७. पत्नसन्नहनं (मौञ्जीमेखलाबन्धनं) १८. इध्म-वेदिबर्हींणां प्रोक्षणं, १९. प्रस्तरग्रहणं (कुश मुष्टिप्रस्तरः) २०. वेदिकास्तरणं, २१. परिधिपरिधानं, २२. इध्मस्याधानं, २३. विधृत्तिस्थापनं, २४. जुहूवादीनां वेद्यां स्थापन, २५. पञ्च-

———

१४२. शतपथब्राह्मणे १. १

१४३. संस्कृतिविशेषाङ्के मासिकपत्रकल्याणे पृ. ४६७

# अमर कोश के ग्रहवाची (वृहस्पतिः, शनैश्चरः, लोहितांगः सप्ताश्वः) शब्दों का विज्ञान-मूलक अनुशीलन

संस्कृत के शब्द अर्थवान् है वे अपने अंतः में जिन अर्थों को छिपाकर रखते हैं वे अर्थ पूर्णतः विज्ञान से अनुप्राणित हैं। प्राचीन भारतीय मनीषियों ने शब्द का निर्माण किसी भी वस्तु घटना या प्राकृतिक कारणों के सूक्ष्म निरीक्षण और अनुसंधान के द्वारा किया था। अतः शब्द प्राचीन भारत की विभिन्न मान्यताओं का रहस्योद्घाटन करते हैं। कोई भी शब्द ऐसा होता है जो किसी-न किसी गंभीर भाव को अभिव्यक्त न करता हो प्रस्तुत लेख में हमने उन्हीं शब्दों को स्थान दिया है जो किसी प्राचीन वैज्ञानिक मान्यता को उद्घाटित करते है।



वृहस्पतिः

बृहस्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः
जीव आंगिरसो वाचस्पति श्चित्रशिखण्डिजः।

अमर कोष (१-३-२४)

उपर्युक्त सभी शब्द बृहस्पति के पर्यायवाची है। इन सभी पर्यायवाची शब्दों में बृहस्पतिः (वृहस्पति इति बृहस्पतिः) और गुरुः (गुरुःआकारः यस्य शब्द वैज्ञानिकता की ओर इंगित कर रहे हैं इन शब्दों के व्युत्पत्ति-मूलक अध्ययन से ज्ञात होता है कि पहले मनीषियों को बृहस्पति ग्रह के बारे में ज्ञान था कि यह ग्रह बृहदकार है केवल बृहदाकार ही नहीं बल्कि अन्य सभी ग्रहों से आकार में बहुत बड़ा है तभी तो मनीषियों ने इस ग्रह को बृहस्पति और गुरु नाम दिये हैं। इस शब्द में निहित वैज्ञानिकता को भाव को हम निम्न संदर्भ से पुष्ट करते है।

'सचमुच वृहस्पति ग्रह सौरमण्डल में सबसे बड़ा ग्रह है बृहस्पति-ग्रह के अतिरिक्त सौरमण्डल में अन्य सभी ग्रहों को मिलाकर एकाकार कर लिया जाय, तो भ उनका सम्मिलित आकार बड़ी कठिनाई से बृहस्पतिग्रह के तुल्य हो सकेगा। हमें पृथ्वी बहुत बड़ी मालुम पड़ती है। पृथ्वी का व्यास आठ हजार मील है ऐसी १,३००० पृथिवियों को एकत्र करिए, तब जाकर कहीं गुरु के जितना बड़ा ग्रह बन सकेगा।

(हमारा आकाश, छोटू भाई सुथार, पृ. १४७)

शनैश्चरः

समो सौरिश्शनैश्चरः    अमर कोष (१-३-२६)

शनिग्रह के लिए दो पर्यायवाची शब्द है सौरि, शनैश्चरः। शनैश्चरः शब्द के व्युत्पत्ति—मूलक अध्ययन से ज्ञात होता है कि "शनैः शनैः चरति इति शनैश्चरः "अर्थात् जो ग्रह मंद गति से गमन करता है वही शनैश्चर ग्रह है यह शब्द स्पष्ट रूप से बता रहा है कि पहले मनीषियों को ग्रहों के बारे में अच्छा ज्ञान था तभी तो उन्होंने शनिग्रह को शनैश्चरः नाम दिया यह शब्द वैज्ञानिकता की ओर इंगित कर रहा है कि अन्य ग्रहों के तुलना में शनिग्रह सूर्य की परिक्रमा काफी धीमी गति से करता है। इसीलिए इस ग्रह को पंगु भी कहते हैं इस शब्द में निहित वैज्ञानिकता को हम निम्न संदर्भ द्वारा पुष्ट कर रहे हैं।

शनिग्रह की सूर्य के परिक्रमा करने की गति बहुत धीमी है। सूर्य से शनिग्रह की औसत दूरी ८८ ६० ००० मील है। मंदगति से यह २९५ वर्षों में सूर्य कीं एक प्रदक्षिणा पूरी करता है। इस तरह मंद गति से गमन करने वाले इस ग्रह का नाम शनैश्चरः पड़ा।

(हमारा आकाश, छोटू भाई सुधार, पृ. १७९)



लोहितांगः

अंगारकः कुजो भौमो लोहितांगो महीसुतः।
अमरकोष (१-३-२५)

उपर्युक्त सभी शब्द मंगलग्रह के पर्यायवाची हैं इन सभी पर्यायवाची शब्दों में अगार इव अंगार के समान लाल है जो। और लोहितांग (लोहितान्यंगान्यस्य। जिसका अंग लाल रंग का है) शब्द इस वैज्ञानिक सिद्धांत की ओर इगित कर रहे हैं कि मंगल ग्रह लाल रंग का है या इस ग्रह में लाल रंग की प्रधानता है। इन शब्दों के व्युत्पत्ति-मूलक - अध्ययन से ज्ञात होता है कि पहले भी मनीषियों को मंगल ग्रह के बारे में ज्ञान था तभी तो उन्होंने इन नामों से अभिहित किया है। अंगारक तथा लोहितांग शब्द में निहित वैज्ञानिकता को हम निम्न सन्दर्भ से पुष्ट करेंगे।

वर्णास्ताम्रसितासिरक्तहरित व्याप्ताश्च चित्रागिता
वन्हयम्बग्निजकेशवेन्द्रशचिकाः सूर्यादिनाथाः क्रमात्
प्रागाद्या रविशुक्ललोहिततम सौरेन्द्रवित्सूरयः
क्षीणेन्द्वर्क महीसुतार्क तनयाः पापा बुधस्तैर्युतः।

सूर्य लाल वर्ण का, चन्द्रमा श्वेत वर्ण का, मंगल अति लाल वर्ण का, बुध हरे वर्ण का, बृहस्पति पीत वर्ण का, शुक्र अनेक मिले हुए वर्ण का और शनि कृष्ण वर्ण का स्वामी है।

इस प्रकार इस श्लोक द्वारा भी ज्ञात होता है कि मंगल ग्रह लाल रंग का है।

निश्चय ही मगल ग्रह लाल रंग का है इसीलिए इसे पश्चिम के लोग युद्ध का देवता कहते हैं।

मंगल ग्रह के अध्ययन से पता चलता है कि वातावरण का कुछ अंश ब्रह्माण्ड में छिटक गया है। बचे-खुचे वातावरण में बहुत कम भाप है। वातावरण की सारी आक्सीजन मंगल की चट्टानों में मिल गयी है जिससे वहां के जमीन पर हर जगह लाल रंग का जग सा लग गया है। मगल पर ऊँचे पहाड भी नहीं है क्योंकि ये लाल रग ने ऊँचे पहाड़ों को काट-काट कर धूल में मिला दिया है।

(हमारा आकाश छोटू भाई सुधार पृ ११७)

सप्ताश्व

सूरसूर्यार्यमादित्यद्वादशात्मदिवाकरा:
भास्कराहस्करब्रध्नप्रभाकरविभाकरा:
भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्मरश्मय
विकर्तनार्कमार्तण्डमिहिरारूप पूषण:
द्युमणिस्तरणिर्मित्र चित्रभानुर्विरोचन:
विभावसुर्ग्रहपतिस्त्विषांपतिरहर्पति:
भानुर्हंस: सहस्रांशुस्तपन: सविता रवि:

(अमरकोष १-३-२, २९, ३०)

उपर्युक्त सभी शब्द सूर्य के पर्यायवाची है इनमें से सप्ताश्व शब्द (सप्ताश्वा यस्य सात घोड़े हैं जिसके) इस सिद्धान्त की ओर इंगित कर रहा है कि सूर्य के सात घोड़े अर्थात् सात रंग होते हैं सप्ताश्व' शब्द के व्युत्पत्ति मूलक अध्ययन करने के बाद हम यह कह सकते हैं कि पहले मनीषियों को यह ज्ञात था कि सूर्य की किरणों में सात रंग होते हैं इस शब्द में निहित वैज्ञानिकता को हम निम्न संदर्भ से पुष्ट करते हैं।



पुराणों में सूर्य के सात घोड़े होने की कथा इसी आधार पर है। उन्होंने किरणों को घोड़ों की उपमा दी है। सातों रंग मिलने से सफेद रंग बनता है इसी से सूर्य सफेद दिखाई देता है एक तिकोना बिल्लौरी कांच लेकर उसे यदि धूप में रखें तो उन सातों किरणों को अलग अलग देख सकते हैं। पानी की बूंदों में जब दूरस्थ सूर्य किरणें चमकती है तो पूर्व या पश्चिम इन्द्रधनुष पड़ता है। इस इन्द्रधनुष में भी सातो रंग के दर्शन किये जा सकते हैं।

सूर्य का रंग देखने में पारे की तरह सफ़ेद मालूम पड़ता है परन्तु उसकी किरणों में सात रंग रहते हैं। यह सब रंग अलग २ ग्रहों के हैं। सूर्य के आस पास जो ग्रह घूमते हैं उनकी किरणें भी पृथ्वी पर आती है और यह भी सूर्य की किरणों के साथ ही मिल जाती हैं। यूरोप के ज्योतिषियों ने यंत्रों द्वारा सिद्ध कर दिया है कि चन्द्रमा का रंग चांदी जैसा सफेद मंगल का तांबे के समान, बुध का गहरा पीला बृहस्पति का सुनहरा, शुक्र का नीलमणि के समान शनिश्चर का लोहेजैसा राहू का अंधियारा और केतु का अनिश्चित रंग है। राहू केतु की किरणें सूर्य में नहीं मिलतीं, इस तरह सात ग्रहों के सात रंग ही सूर्य की किरणों में पाये जाते हैं इस तरह सात किरणों के कारण सूर्य को सप्ताश्व कहते हैं।

संध्या रानी शर्मा शोध छात्रा
रविशंकर विश्वविद्यालय रायपुर (म. प्र)
शोध केन्द्र, शास. दू श्री वे. संस्कृत
महाविद्यालय निर्देशक डा. रामनिहाल शर्मा



## सूचना

दिव्यज्योतिषि प्रकाशनार्थं केवलं लघुलेखाः कविता वा प्रेष्या। दीर्घलेखप्रकाशनं न स्यात् लेखे सुस्पष्टाक्षराणि स्युः!

— सम्पादकः

★




## मध्यप्रदेश संस्कृत अकादेमी
## के पुरस्कार

मध्यप्रदेश संस्कृत अकादेमी प्रतिवर्ष निम्न पुरस्कार संस्कृत लेखकों को प्रदान करती है।

### १. अखिलभारतीय कालिदास पुरस्कार — विषय

रु. २०००० (रु. बीस हजार) — संस्कृत की कृति:

### २ प्रादेशिक पुरस्कार

(क) भोज पुरस्कार — संस्कृत साहित्य संबंधी समीक्षा, संस्कृत अथवा हिन्दी में
रु. १०,००० (रु. दस हजार)

(ख) राजेश्वर पुरस्कार — "पारम्परिक अनुशासनों की संस्कृत रचना अथवा संस्कृत को रचनात्मक कृति:
रु. १०,००० (रु. दस हजार)

(ग) व्यास पुरस्कार — पारम्परिक बिद्वत्ता के क्षेत्र में संपादन अथवा संस्कृत से हिन्दी या हिन्दी से संस्कृत में किसी साहित्यिक अथवा शास्त्रीय कृति का अनुवाद।
रु. ५,००० (रु. पांच हजार)

अकादेमी का अखिलभारतीय नवोदित-प्रतिभा पुरस्कार (रु. ५,००० । संबंधी आयोजन डा. हरीसिंह गौर विश्वविद्यालय, सागर में ११-१२ अक्तूबर. १९९० को हुआ 'विद्यावतां भागवते परीक्षा" पर साहित्य-विमर्श (प्रथम रु. १,१०० द्वितीय रु. ८०० । एवं "संस्कृत रूपक-नृत्य- समूहगायन" (प्रथम रु. २,००० द्वितीय रु. १-१०० । की प्रतियोगिताओं में २०-३५ अवस्थावर्गीय छात्र किं वा प्राध्यापकों ने भाग लिया ।

भारत के ३० करोड़ ब्राह्मणों के संगठन एवं स्वाभिमान पूर्ण जीवन के लिए क्रान्तिकारी अभियान

१५ मार्च १९९१, को २ बजे से

... हिन्दू सभा भवन, निकट बिड़ला मन्दिर, नई दिल्ली में ...



# ब्राह्मण प्रतिनिधि सम्मेलन



## ★ मुख्य विषय ★

१. ब्राह्मण जाति के आर्थिक, सामाजिक एवं राजनैतिक हितों के संरक्षण पर विचार ।

२. योग्यता के आधार पर आरक्षण का आग्रह ।

३ भगवान् परशुराम के जन्म दिवस को सार्वजनिक अवकाश घोषित करवाने पर बल ।

४. दासता के चिन्ह अंग्रेजी एवं पब्लिक स्कूलों की अंधी दौड़ के विरुद्ध जन जागरण ।

५. राष्ट्र भाषा हिन्दी एवं विश्व भाषा संस्कृत के प्रचार प्रसार पर प्रस्ताव ।

६. वेद विद्याओं, संगीत, आयुर्वेद एवं ज्योतिष के पुनरुत्थान हेतु कार्यक्रम रचना।

७. ब्राह्मण जाति को गौरवान्वित करने वाले महापुरुषों को नाना उपाधियों से विभूषित कर सम्मानित करना।

कृपया तन, मन, धन से सहयोग करें

१०० रुपया भेजकर स्वागत समिति के सदस्य बनें।

-: संयोजन समिति :-

| | | |
|---|---|---|
| पं. बालकृष्ण धर्मालंकार | मास्टर श्रीकृष्ण शर्मा | पं. मांगेराम शर्मा |
| पं. श्रीकण्ठ शास्त्री | श्री कौशल किशोर शर्मा | विद्यासागर शर्मा |
| श्रीमती कमला बख्शी | श्री गोपाल पंडित | महेश चन्द्र शर्मा |
| पं. ब्रह्मानन्द शास्त्री | श्री रमेश रामदेव | राम फल त्यागी |
| पं. दीप चन्द शर्मा | पं. वेणी माधव गोस्वामी | चन्द्र प्रकाश शर्मा |

मुख्य संयोजक: विमल देव भारद्वाज

**कार्यालय: १२५, राम विहार, दिल्ली-११००९२**

दूरभाष : २२२२४३०

ब्राह्मणस्य हि देहोऽयं,
क्षुद्रकामाय नेष्यते।



# संस्कृत प्रचारिणी सभा (हि. प्र.)



पिछले महीनों में मण्डी में एक विद्वत् गोष्ठी हुई जिस में "संस्कृत प्रचारिणी सभा" नामक संस्था के बनाने का निर्णय किया गया ।

१. संस्कृत भाषा भारतीय संस्कृति, सभ्यता और साहित्य की प्रमुख एवं प्राचीनतम भाषा है ।

२. पर हमारे अंग्रेजी मोह ने इसे पीछे धकेल दिया है । हमारे देश में अंग्रेजी को तो पहली कक्षा से पढ़ाया जाता है परन्तु संस्कृत को नहीं ।

३. संस्कृत भाषा आज भी किसी भी भारतीय भाषा के मुकाबले में सबसे अधिक अर्थ करी रही है । जो इसे अर्थ करी नहीं मानते वे अन्धकार में भटक रहे है ।

४. संस्कृत के विद्वान् इस के लिए स्वयं उत्तरदायी हैं जिस से इस देश में संस्कृत की आज उपेक्षा हो रही है ।

५. इतना होते हुए भी आज अपने ही देश में संस्कृत उपेक्षा का शिकार क्यों है ?

   १. हम स्वयं इसकी उपेक्षा के उत्तरदायी हैं ।

   २. हम संस्कृत आजीविका के लिए पढ़ते हैं, ज्ञान के लिए नहीं ।

   ३. संस्कृत के प्रति कृतज्ञ नहीं हैं इसके प्रचार और प्रसार के नाम पर कुछ नहीं करते हैं

   ४. संस्कृत में वार्तालाप करने, संस्कृत में पत्र व्यवहार करने में एवं उसका प्रयोग करने में संकोच करते हैं और हीनभावना का प्रदर्शन करते हैं ।

६. क्या हम आज भूल नहीं गए हैं कि :

१. संस्कृत देश की वह भाषा है जो भारत को कन्याकुमारी से कश्मीर और गौहाटी से चौपाटी तक जोड़ने वाली एक मात्र कड़ी है।

२. हमारी अकर्मण्यता और उपेक्षा से संस्कृत राष्ट्रभाषा नहीं बन सकी तभी आज स्वतन्त्रता के ४२ वर्ष बाद भी राष्ट्र भाषा हिन्दी का उत्तर दक्षिण राज्यों में विरोध हो रहा है, जो संस्कृत का न होता।

उक्त सभा इन परिस्थितियों को बदलने के लिए प्रयास करेगी। सभा को सफलता के लिए प्रदेश के सभी विद्वानों के सहयोग से--

श्री तुलसीरमण शास्त्री, सेवा निवृत्त प्राचार्य, मण्डी,

श्री नरोत्तमदत्त शास्त्री एडवोकेट बिलासपुर,

आचार्य शुकदेव सेवानिवृत्त प्राचार्य,

श्री शालग्राम आचार्य सेवानिवृत्त,

डा० ब्रजनन्दन मण्डी,

सन्तराम शास्त्री सरकाघाट,

गिरिधारी लाल शास्त्री मण्डी,

श्री हुताशन शास्त्री मण्डी,

श्री रणजीत सिंह बिधायक बंगाना,
हेमप्रभ शास्त्री, सुन्दर नगर,

इस दिशा में विशेष प्रयत्नशील है।

---

# हि. प्र. राजकीय संस्कृत शिक्षक परिषद

के

तत्वावधान में १८ जनवरी १९९१ को सिरमौर मण्डल के नाहन नगर में एक सम्मेलन का आयोजन किया गया।



उक्त सम्मेलन स्थानीय पंचायत भवन में आयोजित किया गया। हिमाचल प्रदेश के शिक्षा मन्त्री श्री राधारमण शास्त्री सम्मेलन के मुख्य अतिथि थे।

सम्मेलन में संस्कृत में कई कार्यक्रम प्रस्तुत किए गए जैसे नाटक नृत्य आदि। हि. प्र. के प्रसिद्ध लोक नृत्य नाटी को संस्कृत में प्रस्तुत किया गया।

सम्मेलन में अनेक संस्कृत विद्वानों और संस्कृत समर्थकों ने अपने २ विचार प्रस्तुत किए।

## महत्वपूर्ण घोषणा

इस अवसर पर मुख्यअतिथि महोदय ने संस्कृत को दशम कक्षा तक आवश्यक विषय के रूप में पढ़ाये जाने की घोषणा की जिसका सहस्रों लोगों ने भरपूर स्वागत किया।

श्री राधारमण जी ने अपना भाषण संस्कृत मे दिया जिसका उपस्थित लोगों पर बड़ा प्रभाव पड़ा। स्थानीय संस्कृत महाविद्यालय के लिए भवन निर्माण की बात भी शिक्षामन्त्री ने कही। संस्कृत सम्बन्धी सांस्कृतिक एवं क्रीड़ा आदि की गतिविधियों को प्रोत्साहित करने के लिए पांच हजार की राशि की सहायता भी मन्त्री महोदय ने प्रदान की।

# हि. प्र. हिन्दू सार्वजनिक धार्मिक एवं संस्थान विश्लेषण समिति



श्री दीनाथ शास्त्री, विधायक द्रंग, मण्डी इसके प्रधान मनोनीत अन्य सदस्य इस प्रकार :-

१ देशराज, विधायक ऊना हि. प्र.

२. श्री रामरत्न विधायक, हमीरपुर हि. प्र.

३. श्री वीरेन्द्र कुमार विधायक प्रागपुर ।

४. श्री तुलसी राम विधायक ।

५. श्री पद्मनाभ त्रिवेदी जमानाबाद ।

६. मास्टर सोहनसिंह सरकाघाट ।

७. श्री विष्णुदत्त शर्मा पालमपुर ।

८. श्री कन्हैयालाल शिमला ।

९. निदेशक भाषा एवं संस्कृति हि. प्र. ।



# भारत बचाना है तो हिमाचल बचाइये





शान्ता कुमार मुख्य मंत्री हि प्र.



हिमालय हमारी राष्ट्रीय धरोहर और समृद्ध संस्कृति का भण्डार ही नहीं बल्कि समस्त समृद्धि का संवाहक भी है इसके घने हरे जंगल, गहन शान्ति अनन्त निस्तब्धता तथा वैभव शताब्दियों से हमारे कवियों, ऋषियों और मुनियों की प्रेरणा का स्रोत तथा हमारे जीवन दर्शन का आधार रहे हैं। इसके दामन में अनेक सभ्यताए तथा संस्कृतियां जन्मी, फूलीं फलीं और विकसित हुई। श्री कृष्ण ने इस पर्वत को अचल पदार्थों में सर्व श्रेष्ठ बताया कालिदास ने देवतात्मा हिमालय के रूप में इसका वर्णन किया है

किन्तु हमारी इस महानतम राष्ट्रीय धरोहर की आज क्या स्थिति है ? सिकुड़ते वन, बढ़ते शीत मरूस्थल सिमटती हिम रेखा और हिमानिया, बढ़ते भू-स्खलन, सूखते जल-स्रोत भयानक गति से होता भू - क्षरण - सभी इस पर्वत का एक बड़ा ही भयानक चित्र प्रस्तुत करते हैं और खतरे की पूर्व सूचना देते प्रतीत होते हैं। हमारी समृद्धि का प्रतीक मानी जाने वाली पावन नदी गंगा अब बाढ़ों के रूप में तबाही और बरबादी लाती है। हिमालय पानी पर आधारित जल विद्युत परियोजनाए बड़ी मात्रा में बह कर आने वाली गाद के कारण संकटग्रस्त हैं और उनकी आयु घटती जा रही है। आज हिमालय विलाप कर रहा है. इसके पर्यावरण के साथ और थोड़ा सा भी खिलवाड़ समूचे भारतीय उप-महाद्वीप की तबाही का कारण बन सकता है और यह विनाश किसी परमाणु विस्फोट से भी अधिक भयानक सिद्ध हो सकता है।

# सम्पादकीयम्

## समस्तभारते संस्कृतम्

देशोऽस्माक विभिन्नसमस्याभिरद्य परिवेष्ठितो वर्तते । क्वचित्— जलप्रवाहोऽन्यत्र वर्षाभावः, भीषणहिमपातः, असह्योष्णता एवमेव च महती शीतलता पूर्णतः ऋतुवैपरीत्यम् ।

●

निखिलोऽपि शान्तिप्रियदेशोऽयमशान्ति-वन्हि-ज्वालामालयाविष्टो वर्तते । प्रान्तेषु सर्वत्रातङ्कवादः, हिंसा, दमनं, धनजनहानिः, स्त्रीणामपमानं मदिराद्यूतापहरणानि, गृहे गृहे कलहस्य ताण्डवनृत्यम् ।

●

आपणेषु सत्स्वपि बहुतरवस्तुषु महार्घताया विस्तारः सुरसामुखमिव प्रतिक्षणं वृद्धिमुपैति न च तत्र कस्यापि विरोधोऽवरोधो वा ।

●

नेतारः स्वार्थपराः भारतमिमं रसातले नेष्यन्ति नात्र कापि विचिकित्सा । दशजना सम्मिल्य दलनिर्माणं कुर्वन्ति 'यथा राजा तथा प्रजाः" नियमोयं-सार्वकालिकः ।

एतत्सर्वं सर्वत्र देशेऽवलोक्यते परन्तु किमस्ति चिकित्सितमस्य ? अस्य चिकित्सा संस्कृतप्रचारेणैव सम्भवा । तत्कथमिति चेत् – तदावलोक्यताम्:—

भाषानुसारिप्रान्तनिर्माणविचारः संस्कृताज्ञानेन प्रसृतः । प्राक्तना नतारो न्यायविदश्च संस्कृतेन सुपरिचिताः आसन्:- तैः पठितम् :—

भ्रातरो मनुजाः सर्वे स्वदेशो भुवनत्रयम् । ईशावास्यमिदं सर्वम् । मातृ देवो भव, पितृदेवो भव, आचार्यदेवो भव । राष्ट्रदेवो भव । इति ।

अत एव तैः देशस्वतन्त्रतायै प्रयासाः कृताः । देशश्च एकतासूत्रे निबद्धः ।

अद्य संस्कृतं न नेतारो जानन्ति न न्यायविद, का कथा पुनः साधारण-जनानाम् ये च जानन्ति ते प्रायेण सुप्ताः सन्ति । अत एव देशः प्राकृतिका-प्राकृतिकसंकटैः परितो विनाश्यते ।

अस्माकं सुदृढोऽयं विचारो यत्संस्कृतसेवा सदृशी न कापि देशसेवा । अस्याः प्रचाराय सर्वैः संघीभूय कार्यं करणीयम् । संस्कृतभाषा भारतीयानां जन्मतः मृत्युपर्यन्तं सहायिका सहचारिणी च तस्मादस्याः प्रचारप्रसारकृते समस्तभारतीयजनानां योगो ऽत्यावश्यकोऽस्ति देशरक्षायै स्वतन्त्रतोपरान्त-मस्मिन् क्षेत्रे हिमाचलः सर्वप्रान्तेभ्योऽग्रणी वर्तते । भारतस्य सर्वेषु प्रदेशेषु संस्कृत महाविद्यालयीयपरीक्षापर्यन्तमावश्यकविषयरूपेण पाठितं स्यात्तदैव लोकाः स्वसंस्कृतिं रक्षयिष्यन्ति । हिन्दुभिः प्रथम स्वान्त निरीक्षणं कार्यं स्वगृहोत्थानं कार्यं स्वग्रन्थानामादेशा उपदेशाः स्वजीवनेऽवतारणीयास्तदैव कल्याणं देशस्य देशजनानां विश्वस्य च स्यात् नात्र मतद्वयी ।

अतः आयान्तु लोकराज्यसभानिर्वाचनेषु ते एव समर्थनीयाः ये किल संस्कृता भमानिनः स्युः ।

— केशव शर्मा

R. N. 6384/57 ल—33/एस. एम. / 10/91

# दिव्यज्योतिः

संस्कृतस्य सचित्र मासिकम्






...शा कालिदासस्य,
...क्रान्ता प्रवलगति
...स्वादर्भकस्येव,
... तुरगाङ्गवा ॥

-★-

...षम् ३५ शिमला अप्रैल, १९६१ अङ्कः ७

# विषयानुक्रमः



## दिव्यज्योतिः

हि० क० सं०भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकागतमुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति ।

हिमाचल प्रदेश—पंजाब-हरियाणा-जम्मूकश्मीर - मध्य प्रदेश—राजस्थान—महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।

### पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरससुबोध-साधनैः सर्वस्मिन संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकल कलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशितं भवति पत्रस्य वार्षिक मूल्य ३५ रु० अर्धवार्षिकं १८ रु० एकस्याङ्कस्य च रु० २-५० भवति । वर्षारम्भः अक्तूबर—मासतः भवति । ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति । ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोवरा, शिमला-१७१००७ हि० प्र०" इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

## परिचयः


संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, — दूरभाषः 78459

राष्ट्रपतिसम्मानिताः

प्रधानसम्पादकः— आचार्य केशव शर्मा एम. ए., एम, फिल, साहित्यरत्नम् - ,, 8 20

दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-७ (हि. प्र.)

मुद्रकः प्रकाशकः—

भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि. प्र.)

स्वामी:- श्रीमती आचार्य रत्नकुमारी शर्मा

✱ ✱ ✱ ✱ ✱ ✱ ✱ ✱ ✱ ✱ ✱ ✱ ✱ ✱ ✱ ✱ ✱

अप्रैल. १९९१ वैशाखः २०४८ — वर्षम्—३५ अङ्कः ७

वार्षिक मूल्यम् ३५ रु०

# दर्शन-अर्णव-रत्न-शतकम्

केशव राम शर्मा

दर्शनाचार्य, एम. ए. एम. फिल.
(प्राप्त स्वर्णपदकद्वय:)



अथेह प्रस्तूयते श्लोकैकशतकेन भारतीयदर्शनानां प्रमुखं चिन्तनम्। वेदेभ्य एव दर्शनधारा प्रस्फुटति। यद्यपि तेषु दर्शनानां साङ्गोपाङ्गा व्यवस्था न दृश्यते परन्तु परवर्तिदर्शनगृहीततत्त्वानां मूलानि तत्र सुचिन्तितानि समुपलभ्यन्ते। अतस्तानि अपि इह विषयीकृतानि तेषामेव परतनदर्शनविचारविषयाधारीभूतत्वात्। उपनिषदां तु दर्शनत्वे न कस्यापि विमतिः। तदाधृता गीताख्या स्मृतिरपि प्रौढानि दर्शनतत्त्वानि बिशकलयतीति. तयोरुभयोरपि सारसमाहारो विहितः। चार्वाक प्रस्थानमारभ्य वैष्णबदर्शनसम्प्रदायान्तं मुख्यसिद्धान्तसन्दोहः अतिसंक्षेपेण वर्णितोऽस्ति। विस्तारस्य तु तत्तदर्शनग्रन्थेषु द्रष्टव्यत्वात्। संक्षेपम् अधीत्य विस्तृतस्य ज्ञानार्थं कुतूहलं लोके दृश्यते—इत्येवं मनसि विचार्य जीवनेन साक्षात् सम्बद्धाः तत्तत्प्रस्थानस्य रुचिकराः सिद्धान्ता अत्र चर्चिताः। अनेन भारतीयदर्शनानां विशेषज्ञानं प्रति जिज्ञासां जागृयात्—इति एव अस्याः कृतेरुद्देश्यम्। ते चैते श्लोकाः—

विद्याश्चतुर्दशविधाः पुरुषार्थसार्थ—
प्राप्तिप्रयोजनवती रुपदिष्टवन्तः।
तासूत्तमा जयति दर्शननामधेया
यान्वीक्षिकी सकलशास्त्रमतोपकर्त्री ॥ १ ॥

यद् दृश्यते परमतत्त्वमनेन तस्मात्
ख्यातं हि दर्शनमुपायतयाऽऽत्मलब्धेः ।
दृष्टिश्च वाऽवगति रित्यपराभिधाना
विद्वज्जनान्तरविवेकविकासरूपा ।२।

सम्यग् विनिश्चयविहीनजनः पृथिव्यां
व्यर्थं श्वसित्यमजदर्शनशून्यबुद्धिः ।
नान्धो यथा जगदिदं परिचेतुमीशो
भ्रान्तोऽखिलव्यवहृतौ समुपद्रुतश्च ।३।

पूर्वर्षिभि र्जनितदर्शनलब्धबुद्ध्या
लक्ष्यं सुखेन जनुषो लभते मनुष्यः ।
मार्गे हि पूर्वमितरश्रमिकप्रणीते
ऽश्रान्तं व्रजन् निजनिकायमुपैति लोकः ।४।

कोऽहं कुतो जगदिदं कुत एष बन्धो
दुःखात्मको कथमतः सुलभो विमोक्षः ।
किं सत्यतत्त्वमिति वेत्तमशेषमेत—
दीष्टे महर्षिकृतदर्शनशास्त्रमेव ।५।

आप्तोपदेश मननाचरणैरवाप्तम्
अज्ञानसंशयमतिभ्रमलेशहीनम् ।
लब्धाधिकारशुचये ह्यवबोधवद्भि
र्दिष्टं तु दर्शनपदप्रतिपाद्यमत्र ।६।

सत्यानुभूतिमधिगम्य पुरार्षिवर्गः
सत्प्राप्तिसाधनमुपादिशदत्र यद्यत् ।
तत्तद्धि दर्शनमभूत् न पथप्रभेदात
प्राप्तव्यभेद इति विज्ञविचारसारः ।७।

यद् भारतत्त्वमुदितं खलु भारतस्य
तत्सत्यदर्शनविमर्शनकर्मणैव ।
तस्माद्धि दार्शनिकभूमिरियं जगत्यां
शस्ता जगद्गुरुपदेन चिराद् गुणज्ञैः ।८।

मूलाद् रसो बिटपिनोऽवयवान् क्रमेण
पुष्णन् यथा परिणतिं लभते फले हि ।
एवं क्रमाद् विविधदर्शनचिन्तनं हि
संपर्यवत्यति चिदैक्यमतेऽखिलान्ते ।९।

सोपानमादिममतीत्य यथोत्तराणाम्
आरोहणे भवति गन्तृजनः समर्थः ।
ज्ञात्वा तथा प्रथमदर्शनमग्रिमाणाम्
एवं क्रमेण लभतेऽवगमेऽधिकारम् ।१०।

— क्रमशः

राजकीय महाविद्यालय सोलन (हि० प्र०)

---

# गलज्जलिका

## (गज़ल)

भ्रमर ! तव चिन्तितं नहि जाने !
भ्रमर ! तव काङ्क्षितं नहि जाने !!
सुमकलिकामनुसरसि किमर्थम् ?
गायसि नृत्यसि नटसि किमर्थम् ?
भ्रमर ! तव मन्त्रितं नहि जाने !!
निशि सञ्जाता युवतिरिदानीम्
न पतिष्यति कोऽवैति तदानीम्
भ्रमर ! तव रञ्जितं नहि जाने !!
अभिमतमस्या वातविहरणम्
दिशि-दिशि मधुमयगन्धवितरणम्
भ्रमर ! तव जल्पितं नहि जाने !!
ख्यातो जगति तव व्यभिचारः
क्षणिक एष विनतो व्यवहारः
भ्रमर ! तव कल्पितं नहि जाने !!
अयि वैधेय ! विरम विरम त्वम्
मा खण्डय कलिकारुचिरत्वम्
भ्रमर तव जीवितं नहि जाने !
भ्रमर ! तव चिन्तितं नहि जाने !!

अभिराजो डा. राजेन्द्रमिश्रः
संस्कृतविभागाध्यक्षः
विश्वविद्यालयीयः शिमला



# यदि न हि श्रुतं, तर्हि श्रूयताम्

आचार्य श्याम लाल शर्मा,
व्याकरण एवं साहित्याचार्य
(एम. ए. संस्कृत)



विनोद एवं चमत्कारपूर्ण वृतान्तं यत्—कश्चित् कुलकर्ण को नाम कुम्भकारः मुण्डितशिरः महाशोकाकुलत्वेन कुत्रचित निवसति स्म। तमन्यः कोऽपि नगरनिवासी पप्रच्छ—भो! कुम्भकार? मुण्डितमुण्डेन प्रतीयते यत् शोकाकुलोऽसि। कुलकर्णक आह—किं त्वया न ज्ञातं श्री गन्धर्वसेनः स्वर्गमयासीत्। श्रुत्वैतत् सोऽपि गन्धर्वसेनं कञ्चित्महापुरुषं स्वर्गगतं मन्यमानः स्वकीयशिरोऽमुण्डयत्। तद् वचनश्रवणात् अन्य इतरश्चान्य वचनादिति परम्परया मुण्डितशिरस्कानां भूयसी संख्याऽजायत। कश्चित राजसभां प्रविष्टं मुण्डितमस्तकं वीक्ष्य राजापि मुण्डनकारणं जिज्ञासमानो गन्धर्वसेनस्य स्वर्गप्रयाणमश्रौषीत्, स्वकीय शिरोऽमुण्डयत्। राज्ञः मुण्डनानन्तरं राज्ञः महामन्त्री महोदयेन अनुसन्धानं आरब्धम्।

'कोऽयं गन्धर्व सेनेति" नाहं जाने—नाहं जाने. अमुकात् श्रुतं। इत्युत्तर परम्परायां मूलवक्ता कुलकार्यको नाम कुम्भकारः राजसभायां मन्त्री महोदयेन समाहूतः। कुम्भकारः सविषादं अगादीत्—मन्त्रिवर्याः। मम कुटुम्बपरिपालको रासभो रात्रौ अकस्मात् मृतः। तस्यैव नाम गानगुणाद् गन्धर्वसेनः इति कृतमासीत्। श्रुत्वैतत् सर्वे लज्जया अवनतमूर्धानः तूष्णीमभूवन्।

संस्कृतं मृतभाषा इति प्रवादविषयेऽपि एवं विध कौतुकं किञ्चिदनुभवामि तत्र जायते जिज्ञासा यत् संस्कृतं मृतभाषेति केनोक्तम्?

प्रश्नस्य उत्तरमिदं एव यत् श्रूयते । अथवा पाश्चात्याः संजगदुः । केन पाश्चात्येन कस्मिन् ग्रंथे काभिरुक्तिभिः प्रतिपादितं इति न स्पष्टम् । खेदस्य विषयोऽयं यत् रात्रिन्दिवा यया भाषया वयं जीवामः, तस्याः किं महत्वं किञ्च वैशिष्ट्यं इतिवयं न जानीमः, न च ज्ञातुं प्रभवामः। प्रचलितासु विश्वभाषासु संस्कृतभाषेव न जानीमः, न च ज्ञातुं प्रभवामः । प्रचलितासु विश्वभाषासु संस्कृतभाषैव प्राचीनतमेति सर्वसम्मतः पक्षः । प्रायः प्राकृत, सेमिटिक, अंग्रेजी, फ्रेंच, ट्यूटानिक, जर्मनादि निखिला जगद्भाषाः संस्कृतभाषात प्रादुरभवन्निति सर्वेषां भाषातत्वविदां मत्तम् ।

कियद् विचित्रम् ? विडम्बना वा यत् विकसितेषु प्रगतिशीलेषु च जर्मन जापान, इङ्गलैंड, अमरीका रूस प्रभृतिषु देशेषु तत्रत्याः विश्व विद्यालयाः स्वकीयेषु विद्यालयीयेषु पाठ्यक्रमेषु संस्कृतभाषां सोत्साहं सहर्षं च संमेल्य गर्वमनुभवन्ति । परं संस्कृतभाषायाः महत्वं अस्माकं देशस्य उच्चाधिकारिणः नहि स्वीकुर्वन्ति इति अकल्याणदम् इत्थं करणेन पञ्चाम्बुसमस्या अथ च रामजन्मभूम्यादिसमस्यानां समाधानो अथ च उग्रवादः आतंकवादः लुण्ठन पाटनादि दुरभिसन्ध्यादयो दुष्परिणामा निश्चिता एव । एतादृशी घटना मा भूदित्यर्थं संस्कृताध्यापनाध्ययनं अथ च सद्ग्रन्थानामध्ययनमत्यावश्यकम् । अन्ततो गत्वा कामयेऽहं—

भद्रं कर्णेभिः शृणुयाम देवाः ।
भद्रं पश्येमाक्षिभि र्यजत्राः
स्थिरै रंगैस्तुष्टुवा ँ सस्तनूभिः
व्यशेम, देवहितं यदायुः ।

— गांव मोती पत्रालय शोलघा
जिला बिलासपुर हि० प्र०

# वञ्चनम्

श्री पवन कुमार शर्मा शास्त्री



एकः कृषकः निजक्षेत्रेषु मूलीवपनं अकरोत्। तस्मिन् समये एको भल्लूकः तत्र आगच्छत। अवदत्—"भो नर तव अस्थीनि त्रोटयिष्यामि।"

"नहि भ्रातः! एवं न कुरु, करौ संयोजयामि। आगच्छ इदं मिलित्वा वपिष्यामः। भवतु नाम. पत्राणि त्वमेव ग्रहीष्यसि। अहं मूलानि एव आदास्यामि।"

"शोभनीयं एतत् परन्तु अहं प्रतारणम् न स्वीकरिष्यामि स अकथयत्।"

'मूलीसस्यं आगतम्। कृषकः सस्यं संगृहीतवान्। तस्मिन् समये भल्लूकः आगत्य अवदत्—मम भागः कुत्र अस्ति?

"कृषकः भागं वितरितवान्। पत्राणि भल्लूकाय यच्छति, मूलानि स्वयं नयति।"

"आगामिवर्षे कृषकः पुनः तेषु क्षेत्रेषु गोधूमवपनं अकरोत्। तस्मिन् समये भल्लूकः तत्र आगच्छति। अवदत्– त्वया पत्राणि दत्वा-प्रतारितोऽस्मि। अधुना तव कथनं न स्वीकरिष्यामि। कृषकः हस्त संयोजनं कृत्वा अवदत्—आगच्छ इदं मिलित्वा वपनं करिष्यावः। पुष्पपत्रादिकं अहम् आदास्यामि, मूलानि तुभ्यं दास्यामि।"

'भल्लूकः अवदत्-आम्, अधुना त्वाम् न वञ्चयिष्यामि। सर्वाणि मूलानि तुभ्यं दास्यामि।"

"गोधूमस्य सस्यमागतम्। कृषकः अन्नभागं संगृह्णाति। मूलानि भल्लूको नयति। एवम् सः गच्छन् अवदत्—" गतवर्षे त्वम् मम प्रतारणं अकरोः, अस्मिन् वर्षे तु एकमपि मूलं तुभ्यं न दास्यामि।"

— संस्कृत महाविद्यालय
सोलन (हि० प्र०)

# कालिदासीयमेघदूतस्य गीतिकाव्यतया रमणीयता

— डा० सुधागर्ग



महाकविकालिदासः भारतवर्षस्य तेषु कविषु प्रमुखतमोऽस्ति यैः भारतवर्षस्य नाम संसारे प्रकाशितम् । अन्यकवयः तस्य समतां न प्राप्नुवन्ति संस्कृतसाहित्याकाशस्य ग्रहाणामुपग्रहाणां च पंक्त्याम् आदित्य सम कालिदासस्य ज्वलन्तविक्रमः स्वद्युत्या सर्वेषां कान्ति मलिनी करोति । तस्य तेजसि बसन्तारम्भसदृशी प्रातःकालीना सरसता अस्ति, कोमलता च कवितायां गन्धवाहस्य चंचलता सरसता, मादकता च विद्यमानाः सन्ति । कालिदासेन त्रीणि नाटकानि-मालविकाग्निमित्रं, विक्रमोर्वशीयम्, अभिज्ञानशाकुन्तलम् च त्रीणि काव्यानि-रघुवंश-कुमारसंभव, मेघदूताख्यानि विरचितानीत्यत्र नास्ति शंकापङ्कलेशोऽपि । गीतिकाव्यस्य प्रणेतृरूपे तस्य विलक्षण प्रतिभा प्रस्फुरिता ।

आधुनिककाले गीतिकाव्यमिति यो काव्यभेदः कथ्यते मेघदूतकाव्यं तेन क्रोडीक्रियते । संस्कृतालंकारिकैरयं काव्य भेदो न उल्लिखितः तेषां मते – महाकाव्यस्यैकदेशानुसारिणा खण्डकाव्यसमाख्येन विशेषेण क्रोडीक्रियते मेघदूतादि । एवं प्रतीयते - मूलतस्तावद् गानार्थं काव्यं एव गीतिकाव्यं इति उच्यते स्म यथा शाकुन्तले हंसपदिकागानम् 'लिरिक' (Lyric) इति आङ्गलभाषाशब्दस्यापि स एवार्थः । 'लायर' (Lyre) नाम वीणापदवाच्यं वाद्ययन्त्रम् तेन सङ्गतत्वात् Lyric इति । पुरा किल ग्रीक देशे (Lyric) लिरिक पदवाच्यानि काव्यानि वीणायोगेन गीयन्ते स्म । रोमदेशे तु तादृशानि काव्यानि गानं विना पाठ्यमानान्यप्यभूवन् । मध्ययुगे तावत् पाश्चात्यदेशे गानार्थं काव्यं एव

प्राधान्येन लायरिक (Lyric) इत्थं उच्यते स्म । ऊनविंशे शतके तावत् प्राधान्येन व्यक्तिविशेषहृदयगतभावाभिव्यक्तिपरेषु काव्येषु, पश्चात् विंशे शतके चिन्ताधाराप्रकाशनपरेष्वपि काव्येष्वस्य शब्दस्य प्रयोग: सिद्धि गत: ।

साधारण्येन वयमेवं बुध्यामहे । यस्य कस्यचित्नायकस्य नायिकाया वा (तदेकात्मतया कवे:) हृदयगतस्यैकस्यैव भावस्य स्वत्वे परिसरे सम्यगभिव्यञ्जनं गीतिकाव्यलक्षणम् । अस्य च भावस्य करुणरूपत्वे विप्रलम्भश्रृगाररूपत्वे वा काव्यस्य सम्यग्हृदयग्राहितया गीतिधर्मत्वं जायते । अस्यैव हेतो मेघदूतस्यापि हृदयग्राहिता । नात्रोपलभ्यते वृत्तमाला न वा केवलं आलिख्यते । विरहिणी यक्षस्य दुर्बिषहां तव्यथैव समग्रे काव्ये वाङ्मयरूपमापन्ना । कान्तायै सन्देशं निवेदयितुमना यक्षो मेघ दौत्ये नियोजितवान् । मेघदूते प्रबन्धे कवे: कल्पना नवीने मार्गे पदं कृतवती । काव्यस्यास्य कथावस्तु प्रायेण सर्वं कविकल्पितम् । विरहातुरस्य तस्य हृदयव्यथामुपजीव्यैव काव्यमिदं प्रणीतम् । यद्यपि रामगिर्याश्रमतोऽलकावधिर्मेघेनातिक्रान्त: सुदीर्घ: पन्था विचित्रवर्णाढ्योऽत्रोलिखितस्तथापि सर्वं तद् विरहिण: कान्तायै-सन्देशप्रेषणरूपमेकमेव विषयं केन्द्रीकरोति । विरहातुरस्य वियोगव्यथाया रसरूपतया परिवेषणमत्र विषयीक्रियते । मार्गादिचित्रकदम्बकं तूपादानमेव, न तूपादेयम् । पूर्वमेघगत: सुदीर्घ: पन्था उत्तरमेघगतां अलकापुरीं एव लक्ष्यीकरोति । तत्र दशाविपर्यग्रस्ता नायिका यक्षप्रिया विराजते । ततो नायकस्य विप्रयोग एव काव्यस्यास्य मूल भूतं वस्तु । आदित: प्रभृति सर्वत्र हि वर्णनमध्ये यक्षस्य अन्तर्व्यथा एव प्रकाशते । गीतिकाव्यतया एतद् एव मेघदूतस्य सार्थक्यम् । तथा एव श्लोके —

"यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्याश्रमेषु ।

(मेघदूतपूर्व भाग–१)

इत्यत्र 'जनकतनयास्नानपुण्योदकेषु' इति पद उपादानेन यक्षस्य दु:सहा वियोगव्यथा एव ध्वनिता । जनकतनया यत्र प्रियतमसङ्गता सुखेन दिनानि प्रतिवाहितवती तत्रैव मया अद्य कांता वियुक्तेन

वर्तितव्यमिति दुःसहं सर्वथेति भावः । किञ्च, बहुत्र वर्णनीयेषु कामिजनव्यवहारसमारोपेण यक्षेण प्रबला मनोयातनैवाभिव्यंजिता । यथा —

रेवां द्रक्ष्यस्युपलविषमे विंध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥

(पूर्वमेघ १—१९)

यथा चोक्तमुज्जयिनी नगरीमनुलक्ष्य—

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः ।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि ।

(मेघदूत, पूर्व भाग श्लोक २४)

इति क्वचिद्वा मेघमेव नायकरूपेण प्रकल्प्योक्तं यथा—

गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम् ।
तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्यात्
मोघीकर्तुं चटुलशफरोद्वर्तनप्रेक्षितानि इति ।

(पूर्व मेघ. ४३)

सर्वम् एतद् एकतः प्रकृतेर्मनोज्ञं चित्रमुपस्थापयति, अपरतश्च गीतिकाव्यधर्मानुरोधेन मुख्यं विप्रलम्भशृंगारं एव पुष्णाति । प्रसंगत एतद् उल्लेखमर्हति । प्रकृतिपटे व्यवहार समारोप्य अस्याऽपरमपि तात्पर्यमस्ति । "एतन्माहात्म्यादेव कविकृतं शैलसरित्प्रभृतिवर्णनं पुनरावृत्तिदोषं नावहति प्रत्येकमेवालेख्यं नव नव रमणीयतया सहृदयान् परितोषयति । अन्यथाऽचेतनानां गिरिस्रोतःप्रभृतीनां वैरूप्यात् तत् वर्णनं चमत्कृतिरहितं स्यात् ।

अत्रेदमवधेयम् । शृंगाररसात्मकं हि काव्यं मेघदूतम् । शृंगारश्च सम्भोगविप्रलम्भाभ्यां प्रकारद्वयं भजते । तयोश्चान्तरङ्गः सम्बन्धः । यथा- 'न विना विप्रलम्भेन सम्भोग- पुष्टिमश्नुते' (इयं उक्तिः साहित्यदर्पणे उद्धृता) तथा सम्भोगं विनापि विप्रलम्भः शशविषाणायते । वास्तवसम्भोगरहितोऽपि विप्रलम्भो मानससम्भोगसनाथितः पुष्टिमश्नुते । कालिदासेन मेघदूते एतत्

निपुणमुप्रतिपादितम् । पूर्वमेघगतं मनोमोहनमालेख्यजातं कान्ताविरहितस्व-यक्षस्य मानससम्भोगस्यैव विभावरूपेण प्रतिभाति । सर्वं भोग्यजातं नायकस्य मनसि स्वकीयां भोगस्पृहाम् उद्बोधयति । एतदेव व्यक्तम् उपलभ्यते उत्तरमेघे नायकवचनतः—

पश्चादावां विरहगणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतं शरच्चन्द्रिकासु क्षपासु ।।

उत्तरमेघ–५०

एवं खलु अस्मिन् काव्ये सम्भोगविप्रलम्भात्मकः परिपूर्णः शृंगार आस्वाद्यते रसपिपासुभिरिति मेघदूतकाव्यस्य अतितरां चमत्कृतिमुपलभामहे । एकेनैव प्रयासेन सम्भोगविप्रलम्भयोर्युगपद् पुरस्कारे च कालिदासस्य सुनिपुणम् कवित्वं संस्तूयते ।

उत्तरमेघेऽलकापुरीवर्णने शृंगारस्य परिपोषकं भूयस्तत्त्वम् उपलभ्यते । ब्रह्मानन्दाधिगमे यथा सर्वमितरद् अगण्यं भवति तथा अलका सौन्दर्ये नयन-गोचरे सर्वमन्यद् विलीयते । इह खलु जगति सुखञ्च उभयमेव युगपद् विराजते । आनन्दश्च क्लेशश्च द्वावप्यत्र पर्यायेण समापद्येते । लोकोत्तरायां त्वलकायां सर्वमेवानन्दमयं सर्वमेव सुचारु सर्वमेव हृदयाह्लादि । तथाहि—

आनन्दोत्थं नयन सलिलं यत्र नान्यैर्निमित्तै—
र्नान्यस्ताप कुसुमशरजादिष्टसंयोगसाध्यात् ।
नाप्यन्यस्मात् प्रणयकलहादि प्रयोगोपपत्ति–
र्वित्तेशानां न च खलु वयो यौवनादन्यदस्ति ।।

उत्तरमेघ ४

लोकोत्तर माहात्म्यजन्या सर्वदा सर्वर्तु सम्पत्तिरपि तत्रोक्तम्—

हस्ते लीलाकमलमलके बालकुन्दानुविद्धं
नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ।
चूडापाशे नवकुरबकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ।। (२-१)

अलकापुर्या एतादृशवर्णनाया स्तात्पर्यम् उपलभ्यते अनन्तरवर्तिनि दशाविपर्ययकवलितायां यक्षपत्न्या आलेखने । सर्वसुखाकरेऽप्याभोगे विरहिणी यक्षप्रियाम्लानेव पद्मिनी विराजते या खलु–

उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।
तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथञ्चिद्
भूयोभूयः स्वयमपि कृतां मूर्छनां विस्मरन्ती ॥

उत्तरमेघ–२६

एतदेव परम कारुण्यनिदानं यत् सर्वसम्पत्तिविभूषितेऽपि विषये निखिलभोगवञ्चितैषा तपस्विनी यक्षप्रिया दैवाद् दौर्भाग्यस्य परां काष्ठां गता । यत्संविधाने सर्वं आनन्दनिदानम् आनन्दं उत्पादयति, सर्वं सुखकरं सुखम् आपादयति, हा ! तस्या भाग्यहीनाया स एव प्रियजनः सकलसुखमूल भूतोऽद्य सन्निहितः । अखिलसुन्दर सन्निधावपि सौन्दर्यस्याधिदेवतैव दूरं गतेति कुत आनन्दो विरहिण्या ? विदितं एवेद एतेषां यद् विरहिणां चन्द्रिकाप्यग्नीयते कुसुममपि वज्रायते विकस्वरोऽपि हृदय भिनत्तीति । एतादृशस्य वैपरीत्यस्य समुपस्थापनायैव कविना प्रागलकायाः सुचारुवर्णनां प्रदाय, तत्र यानामानन्दोत्सवानां प्रत्यक्षायमाणं चित्रमुपस्थाप्य पश्चाद् यक्षप्रियायाः तपस्विनी मूर्तिसंलिखिता । एतस्मिन् सम्यङ् निहितं उत्तरमेघस्य काव्यसौन्दर्यं यथोचितमुप लभ्यते, न अन्यथा । एतद् एव काव्यस्यास्य परमं विप्रलम्भपरिपोषक तत्त्वं यत्–

नीवीबन्धोच्छ्वसितशिथिल यत्र बिम्बाधराणां
क्षौमं रागानिभृतकरेष्वाक्षिपत्सु प्रियेषु ।
अर्चिस्तुङ्गानभिमुखमपति प्राप्य रत्नप्रदीपान्
ह्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ।

उत्तरमेघ, ७-११

तत्रैव

तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ।
श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः ॥

उत्तरमेघ, २२

इति विपर्यस्ता जीवन्मृता रमणी पर्यवेक्षणीया । सुखदुःखयोः एवं विधविपरीतचित्रालेखने भोगसम्पत्त्यैव च दुःखस्य समुज्ज्वलीकरणे कालिदासस्य लोकसामान्या कविप्रतिभा लक्ष्यते ।

विप्रलम्भशृंगारस्य सुचारुरभिव्यक्तिर्लक्ष्यते उत्तरमेघे कान्तां प्रति नायकस्य सन्देशे। संदेशप्रधानत्वाद् दूतकाव्यं सन्देशकाव्यम् इति नामान्तरम् अस्ति। काव्यस्य निगूढो भाव: सन्देशं सम्यग् विकाशमापद्यते। प्रकृते यक्षस्यान्तर्ज्वलन्नाधि: सन्देशभागे पूर्णकुम्भादुच्छलित तोयमिव परिपावक: सहृदय हृदयान्यावर्जयति। यथा हि–

श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान्।
उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रू विलासान्
हन्तैकस्मिन् क्वचिदपि न ते चण्डि! सादृश्यमस्ति।

उत्तरमेघ-४३

प्रकृतिचित्रणे कालिदास: क्वचित नायिकाया तनु अवयवविशेषाणां सादृश्यं अन्वेष्यति। मानवास्तु परिपूर्णस्य सादृश्यस्य मृगयितार:। अतएव एकत्र कान्ताया रूपलावण्यस्य परिपूर्ण सादृश्यमलभमानस्य यक्षस्य विषादोऽत्राभिव्यज्यते हन्त इति। किञ्च प्रणयकुपिताया: कान्तायाश्चित्रालेखनमप्युक्तम्—

त्वामालिख्य प्रणयकुपितां धातुरागै: शिलाया–
मात्मानं ते चरणपतितं यावदिच्छामि कर्तुम्।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्त:॥

उ० मे० ४५।

अत्र निष्करुणस्य कृतान्तस्य दुर्विषहेण वज्राघातेनैकतो यथा हृदयमस्माकं कारुण्यरसमवगाहते तथापरत: प्रणयकुपिताम् इति पदमपि श्लोकस्य भूयो रामणीयकं परिपोषयति। अयं अत्राशयो यक्षस्य। कुपितैव प्रिया मे शोभतेतमाम्। कोपश्च प्रणयिन्या एव सम्भवति। अत: अस्या: प्रणयकुपिता मूर्तिर्मया लिखिता न त्वपराधादिजनित: कोष:। अतोऽस्य चमत्कारित्वम्।

कृत्स्नेनानेन सन्देशेन यक्षस्य कान्तां प्रति विरहोऽपि अविनाशी बद्धमूलोऽनुराग एव अभिव्यज्यते। काव्यान्ते एतदेव स्पष्टम् उक्तम्–

स्नेहानाहु: किमपि विरहे ध्वंसिनस्ते त्वभोगा–
दिष्टे वस्तुन्युपचितरसा: प्रेमराशीभवन्ति।

(उ० मे० ५)

अयं एव प्रणय: स्वर्गीयो येन विप्रयोगेऽपि उभयो: हृदयं संश्लिष्टमस्ति येन विरहेऽपि स्मृतिर्न लुप्यतेऽपितु क्रमेण अनुराग उपचीयतेतराम्।

विरहिणो यक्षस्य यातनायां विषयीकृतायामपि स्थानकाल१ाादिनि-विशेषं पाठकहृदयेऽनया कापि विरहव्यथोद्बुद्यते । साधारणीकरणमहिमायं साहित्यमात्रस्य मूलभूतं तत्त्वं का कथा गीतिकाव्यस्य। प्रकृते यद्यपि यक्षो वक्ता तथापि यो नाम विरहिजनोऽत्र चित्रितः स हि सनातन मानव-हृदयस्यैव प्रतिनिधिः । या खलु विरहयातनाऽत्र मनोरमया वाम् भङ्ग्या गीयते निखिलजनहृदयगतैव सा । अतएवाद्ये श्लोके कविना नायको न नामग्राहम् उल्लिखितः, उक्तन्तु तेन 'कश्चिद यक्ष' इति । कश्चिदित्यनिश्च-यार्थक पदेनैतद् व्यज्यते - न हि विशिष्टः कोऽप्यत्र विषयीक्रियतेऽपि तु यस्य कस्यापि जनस्य हृदयगतो भावोऽत्राभिव्यज्यते । समस्तकाव्यतश्चेद मेव तत्त्व-मुपलभ्यते सुधीभिः । अन्ततस्तावत् काव्यस्य अस्य भाववाहिच्छन्दोऽवलम्ब्य किञ्चिद् वक्तव्यम् । सन्दर्भ अन्तरेषु कालिदासेन बहुविधानि छन्दांसि नैपुण्येन प्रयुक्तानि । अस्मिन् विषये मेघदूतं स्वातन्त्र्यं भजते । एकेनैव च छंदसा मंदाक्रान्तावृत्तेन काव्यमिदं विरचितम् । भावैकत्वेन सह वृत्तैकत्वस्य का नामापूर्वा संगतिः । अत्रत्यस्य भावस्यैतदेव वृत्तं शोभ-नतमं वाहकम् । विरहिणोऽन्तर्व्यथायाः प्रकाशनपटु सुललितगति धीर गम्भीरं वृत्तं इदम् । उक्तञ्च क्षेमेन्द्रेण– 'प्रावृड्प्रवासव्यसने मन्दाक्रान्ता विराजते इति । (सुवृत्ततिलके ३-२)

अतएव विरहविषयकाणि बहूनि दूतकाव्यानि तावदनेन वृतेन विरचितानि बभूबुः परन्तु समस्तकाव्ये एव छन्दसः प्रयोगेण भावाभिव्यजनं दुष्करम् । अथ च कालिदासेन अत्यंत नैपुण्येन तदेव दुष्करं साधितम् । छन्दः पूरणार्थं न क्वापि प्रयुक्तमन पेक्षितं पदं न क्वापि शिथिलो जातश्छन्दोबन्धो न वा क्वापि न्यूनतोऽपि व्याहतो भावः । एतत्सर्वमवेक्ष्योक्तं क्षेमेन्द्रेण–

सुवशा कालिदासस्य मन्दाक्रान्ताः प्रवल्गति
सदश्वदमकस्येव काम्बोजतुरगाङ्गना ॥ (सुवृत्ततिलके ३-३४)

अंते ऽसाधारण्येन वय एवं वक्तु शक्नुम –मेघदूतकाव्यग्रंथस्याभि-व्यक्तिः विविधउपादानैः मनोज्ञत्वं च निर्विवादं सर्वैरङ्गीक्रियते । एकमपि काव्यं काव्यजगति समुज्ज्वलं सूर्यवत् समुद्दीप्तं सत् सर्वासु दिक्षु रसिकजनहृदयेषु विमलमानन्दमातनोति ।

— द्वारा श्री विनोद कुमार गुप्ता
एपिल हाउस शिमला

# उपनिषदो प्रतिपाद्यो विषयः

— डा० सूतदेवहंसः



उप+नि इति उपसर्गद्वयी—समायोगात् सद् धातोः क्विपि उपनिषत् शब्दो व्युत्पद्यते। सद् धातोः विनाश-गति-अवसानादयोऽनेकेऽर्थाः उपलभ्यन्ते। एतेषां सर्वेषामेव अर्थानां संगतिः उपनिषत् शब्देन सह एवं प्रवर्त्तते. तथाहि—या विद्या सर्वेषाम् अनर्थोत्पादकानां सांसारिक-क्रियाकलापानां विनाशिनी यया संसारस्य कारणभूताया अविद्याया बन्धनानि शिथिलानि समाप्तप्रायाणि वा जायन्ते, यया ब्रह्मज्ञानस्य प्राप्ति र्भवति, सा एव अस्ति उपनिषद् विद्या।

भारतीयविचारपरम्परायां इतिहासे उपनिषदाम् आविर्भावेन वैदिकसाहित्ये सर्वथा नवयुग-सूत्रपातो भवति। यद्यपि उपनिषदां मन्त्रसंहिताभिः सह प्रत्यक्षसम्बन्धोऽस्ति, तथापि ताः ब्राह्मणसाहित्यस्य आलोचकाः इति कथनं समीचीनं प्रतीयते। उपनिषदो वैदिकभावना-विकास—रूपा मन्यन्ते। यत्र ब्राह्मणग्रन्थाः कर्मभावना—प्रवर्त्तकाः तत्र उपनिषदः ज्ञान—भावनाप्रवर्तका सन्ति। उपनिषद-युगो भारतीय विचारधारापराकाष्ठायुगो मन्यते। अस्मिन् युगे नवीनानि अन्वे-षणानि, नवीनाः मान्यताः तथा अभिनवानि चिन्तनानि प्रावर्त्तन्त जीवन—जगद्ब्रह्मविषयकाणां गूढग्रन्थीनां समाधानं, महतीनां जिज्ञासानां स्पष्टीकरणं च अस्मिन् काले चामत्कारिकरूपेण उपलभ्यते। आत्मन शरीरस्य च पृथक्ताया विचारो वेदेषु अवश्य वर्णितोऽस्ति, किन्तु आत्मनो गमनस्य मनो विषये तत्र न कोऽपि संकेतो लक्ष्यते। उपनिषत्सु ज्ञान काण्ड प्राधान्यात् धर्मस्य सूक्ष्मातिसूक्ष्मं - स्वरूप विचारकारणाच्च उपनिषत्कालो वैदिकधर्मस्य चरमोत्कर्षकालः कथयितुं शक्यते। यत्र वेदप्रवर्त्तकाः कवयः, ब्राह्मणग्रन्थ-प्रवर्त्तकाः पुरोहिता, तत्र उपनिषदां प्रवर्त्तका रहस्यवादिनः सन्तः आसन् इति निःसंकोचं कथयितुं पार्यते।

यद्यपि उपनिषद् - वाक्य - महाकोशे त्रयोविंशत्युत्तर द्विशतसंख्य-कानाम् उपनिषदां नामावली समुपलभ्यते, तथापि ईशावास्य- केन- कठ-

प्रश्न- मुण्डक - माण्डूक्य - तैत्तिरीय - ऐतरेय - छान्दोग्य - बृहदारण्यक- कौशीतकी - श्वेताश्वतर - नामभिः प्रख्याततमा द्वादश उपनिषदः प्रमुखाः सन्ति। विषय - दृष्ट्या वेदानां प्रमुखाः कर्म - उपासना-ज्ञान - नामकाः त्रयो भागाः सन्ति। कर्म - विषय प्रतिपादनं संहिता ब्राह्मण ग्रन्थेषु दरीदृश्यते। उपासना - विषय संहिताऽऽरण्यक भागयोः उपलभ्यते, ज्ञानभागप्रतिपादिकाश्च उपनिषदः मोक्षसाधन- मार्गं निर्दिशन्ति। वादरायण वेदव्यास-निर्मिते "उत्तर - मीमांसा - दर्शने" अस्य ज्ञानभागस्य सूक्ष्मरूपेण वर्णनं संदृश्यते। शारीरिकमीमांसा - वेदान्त दर्शन ब्रह्मसूत्र - नामान्यपि अस्यैव दर्शनस्य प्रथितानि नामानि सन्ति।

कर्मविद्या, अपरा विद्या, ब्रह्मविद्या च श्रेष्ठत्वात् परा विद्या मन्यते। उपनिषदो ब्रह्मविद्या-प्रतिपादिकाः तत्काल - फल - दायिन्यश्च सन्ति। यत्र कर्मफलं नश्वरं तत्र ब्रह्मविद्याफलं अविनश्वरं मोक्षफलदायकं चास्ति। पराविद्या - प्रतिपादितासु उपनिषत्सु अपराविद्या-प्राप्त्यै अपि निर्देशो लभ्यते। मुण्डकोपनिषदि शौनक - प्रतिबोधाय अंगिरामहोदय पराऽपरयो ज्ञानं आवश्यकत्वेन निर्दिशति। चत्वारो वेदाः, षड् वेदांगानि, अपरा विद्या, क्षय शून्य ब्रह्मविद्या - प्रतिपादिका विद्या च पराविद्या भण्यते। वेदान्ताचार्याः श्रुति - स्मृति-न्याय-नामभिः वेदान्तदर्शनं त्रिषु भागेषु विभजन्ति। तदनुसारं उपनिषदः श्रुतयः, गीता स्मृतिः ब्रह्मसूत्रं च न्यायभागे परिगणितं लभ्यते।

प्रकृति - पुरुष परमात्मनां विवेक एव उपनिषदां प्रतिपाद्यो विषयः। उद्भिज्जाः अण्डजाः स्वेदजाः जरायुजाश्च चतुर्विधा देहधारिणः वाक्पाणि पाद पायूपस्थनामकानि पञ्च कर्मेन्द्रियाणि, चक्षुः श्रोत्र घ्राण जिह्वात्वङ्मनो बुद्धिचित्ताहंकार - नामानि नव ज्ञानेन्द्रियाणि विषयश्च इति सर्वे प्रकृति-तत्त्व - कार्य - व्यापाराः परिगण्यन्ते। आत्मा अजन्मा, नित्यः, शाश्वतः पुरातन इत्यादिनामभि सम्बोध्यते। सः जन्ममरणरहितः नष्टेऽपि शरीरे अनश्वरः, मेधावी, दुग्धे नवनीत वद् जगद् - व्याप्तश्च मन्यते। अक्षराद् ब्रह्मणो जीवानाम् उत्पत्तिः प्रज्वलिताद् अग्नेः स्फुलिंगवद् जायते। कौशीतक्याम् उपनिषदि चतुर्थेऽध्याये आत्मज्ञानं परमावश्यकं विहितम्। प्रज्ञात्मा शरीरे कोष्ठे अग्निवद् व्याप्नोति। सम्पूर्णाः प्राणचेष्टा धनलुब्धका धन मिव प्रज्ञात्मानम् अनुधावन्ति। अस्मिन् प्रज्ञात्मनि ज्ञाते सत्येव सकल-पाप-

विनाशः दुःखविनिवृत्त्या परमानन्द प्राप्तिश्च सम्भवति, अत एव गौतमबौधायन – वसिष्ठ-विष्णु - प्रभृति - धर्म सूत्राणि पापमुक्त्यै उपनिषद् विद्याऽध्ययनं प्रबलतया समर्थयन्ति ।

उपनिषत्सु जगज्जीव ब्रह्मणां उपादानभूताया मायाया (प्रकृतेः) अनेकैः प्रकारैः वर्णनं संलक्ष्यते । उपनिषत्प्रतिपादितानाम् आसाम् नेकमुखीस्थापनानाम् फलस्वरूपमेव कालान्तरे दर्शनानां विभिन्नपरम्पराप्रतिष्ठानन्तरं विचार क्षेत्रे युगान्तर प्रादुर्भावा दरीदृश्यन्ते । ब्रह्मजीवयोः अभेदबोधकानि "जीवो ब्रह्मैव नापरः", "तत्त्वमसि", "सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्", "सर्वं खल्विदं ब्रह्म" इत्यादिवाक्यानि दर्शन ग्रन्थबीजानि मन्यन्ते । एषां उपनिषद्वाक्यानाम् असंग तिकारणादेव षड्दर्शनोत्पत्तिः इति निश्चप्रचम् । एतेषां विभिन्नवादानां प्रवर्त्तका आचार्या एवं परिगण्यन्ते—

१. मध्वः द्वैतवादप्रवर्त्तकः शंकरोऽद्वैतवादप्रवर्त्तकः, रामानुजो विशिष्टाद्वैतप्रवर्त्तकः वल्लभः शुद्धाद्वैत प्रवर्त्तकः, निम्बार्कश्च द्वैताद्वैतप्रवर्त्तको मन्यते ।

उपनिषदाम् एकमात्र प्रतिपाद्यो विषयो ब्रह्मास्ति । ब्रह्मणः कथं सत्ता ? ब्रह्मजगतोः कः सम्बन्धः ? ब्रह्मजीवात्मनो किं स्वरूपम् ? ब्रह्मोपलब्धेः कतमो मार्गः ? आत्मा, प्रज्ञात्मा प्रज्ञानं किं ब्रह्माऽऽत्मैक्य-रहस्यं किम् ? कोऽर्थो ब्रह्मसाक्षात्कारस्य ? इत्यादयो नैकेविषयाः तत्र विस्तारपूर्वकं वर्णिताः समुपलभ्यन्ते ।

तैत्तिरीयोपनिषदि कथितं यद् अध्यात्मविद्याया ब्रह्मविद्याया वा नामैव उपनिषदिति । वेदानां ज्ञानकाण्डत्वात् सा चिरप्रदीप्ता ज्ञान-दीपिका चास्ति । उपनिषज्ज्ञानस्य प्रतिव्यापक - विचार - धारानुसारं संसारे ब्रह्मातिरिक्तं न किमपि वस्तु । छान्दोग्योपनिषदि जीवोऽपि ब्रह्मस्वरूपो मतः । ब्रह्मस्वरूपेणे देहधारिणे जीवाय उपनिषद्ज्ञान-प्राप्तिः परमाऽऽवश्यकी यतो हि अविद्यायाः प्रभावेण स निजं वास्तविकं अजन्मानं सच्चिदानन्दमयं स्वरूपं विस्मृत्य स्वात्मानं जन्म मरण सुख दुःख समालिप्तं च मन्यमानोऽस्ति । एतस्मात्कारणादेव स जन्म-मरण-बन्धनैः मोक्षं प्राप्तुमसमर्थोऽस्ति । उपनिषत्सु तदेव ज्ञानं सञ्चितमस्ति यत्प्राप्य जीवः दुःखैर्विनिर्मुक्तः, ब्रह्मभूतः, ज्ञानी च सञ्जायते । एवंविधो ज्ञानी जीवो मोक्षं लब्ध्वा अनन्तस्य आनन्दस्य अधिष्ठाता भवितुं सम्भवति ।

जन्म दुःखमूलकम्. तस्मादुद्धारिणी, परमार्थस्वरूपप्रबोधिनी विद्येव उपनिषन्नाम्ना कथ्यते । तत्त्वजिज्ञासूनां कृते अयमेव परमार्थः, क्लेश पराभूतानां जीवानां कृते च परमोपकार साधनमस्ति ।

"सुख दुःखे समे कृत्वा, लाभालाभौ जयाजयौ ।
ततो योगाय युज्यस्व, योगः कर्मसु कौशलम् ॥"

इत्यादिना गीतानिर्दिष्ट - परम - पुरुषार्थ इव उपनिषदोऽपि निष्काम - कर्त्तव्य - प्रतिपादनात् कर्तव्यशास्त्रम् आत्मनि समादधति । एवं उपनिषत्सु गूढब्रह्मतत्त्व - प्रतिपादनं, नीति निर्देशेन अध्यात्म-जगतोऽतीवसुगम - मार्गदर्शनं च वर्णितमस्ति । उपनिषद्दर्शनम् अद्भुत-व्यावहारिक - ज्ञान कुञ्चिकेति सम्यग् अवबोद्धव्यम् । उपनिषत्सु सत्यस्य प्रतिपालनाय कठोरतमा आज्ञाः प्रतिज्ञाश्च प्रतिनिबद्धाः सन्ति । "सत्यमेव जयते नानृतम्" इत्यस्ति आस्माकिन्याः सभ्यतायाः सारः, अत एव स्वतन्त्र - भारत - ध्वजे ऽस्यैव निदर्शनम् । किं बहुना, सत्यवादी दृढप्रतिज्ञ एव मनुष्यो देवलोकाधिकारी भवितुमर्हतीति अस्ति उपनिषदां डिण्डिमघोषः । उपनिषदां तत्त्वज्ञानान्तर्गतं आचार-कर्त्तव्य - व्यवहार - सम्बन्धिन्यो नैका उपयोगिन्यो वार्त्ताः संगृहीताः सन्ति ।

अत एव अकबर . दारा शिकोह ऐम० गेंटिल-मोहनराय-ओथमर फ्रांक जे. डी. लंजुईनास वेबर - मैक्समूलर - एफ मिशत - ओ० वोर्टलिक - पाल ड्यूसन - आर० ई० ह्यूम - ई० रोअरराजा द्विजेन्द्रलाल मिश्र - तुकाराम तात्यां-सीताराम शास्त्री - गंगानाथ झा-श्रीपाद कृष्ण वेल्वाल्कर प्रभृतयः शतशो देशीया विदेशीया श्च विद्वांस उपनिषदां मुक्तकण्ठेनप्रशंसां कुर्वन्ति । भारतीय—संस्कृत्या निष्ठावत्या विदुष्या डा० एनी० वेसेंट महोदयाया मतमुद्धृत्याहं एतां वार्तां समाप्नोमि. सा कथयति- Personally I regard the Upnisads as the highest product of the human mind the Crystallized wisdon of divenely illumined men.

— देवेश्वर निवास, नई बस्ती
मालेर कोटला
१४८०२३



# "अद्यत्वे यौतुकम्"

ऊर्मिल गौतम शास्त्री

यास्केन निरूक्तस्य तृतीयाध्याये वर्णितं यत् वेदेषु पुत्राः पुत्र्यश्च समान रूपेण दायादाः सन्ति। ऋचां वर्णनैः निरुक्ते इदं सिध्यति यत् सम्पदां अधिकारः अभ्रातृमतीनामेव स्त्रीणामासीत् ततश्च गच्छता कालेन कन्यानां विवाह कालेषु पैतृक - धनेन तासां सम्मानं प्रारब्धम्। गृह्यसूत्रेषु ये विवाह - विधयः वर्णिताः सन्ति तेषु कुत्रापि यौतुकस्य अनिवार्यता नासीत्। यदि सूत्र साहित्यं वयं परिशीलयामः तदा इदं दृश्यते यत् ते बिधयः अतीव सरलाऽऽसन्। तत्र बिवाहानां सरलतया नासीत अति व्ययसाध्यम् किमपि कार्यम् पर अद्यत्वे इदं दृश्यते यत् कन्यानां सम्मानस्य नाम्ना बहुभिः यौतुकस्य प्रथा भयंकर रूपेण प्रवर्तिता अस्या प्रथाया भयंकरता अत्याचाराणां सीमानं स्पृशति। विबाहानां पवित्रा सम्बन्धाः यौतुकस्य मात्रां निर्धार्य निर्णीयन्ते। एवं विधिना कन्यानामेव क्रय विक्रयौ न भवतः परं पुरुषाणामपि क्रयविक्रयौ प्रचलतः। बुभुक्षुभिः यैः अनेक कुप्रथासु अथस्य नाशः कृतः तैः स्त्रीणामुत्पीडनं प्रारब्धम्। येन केनापि विधिना ते कन्या पक्षात धनं प्राप्नुयु, इति कृत्वा तैः बधूनां क्लेशनं ताड़नम्, मारणं इत्यादिक प्रारब्धम्। अयं दुर्भाग्यस्य बिषयो यत् सम्पन्नेषु परिवारेषु इमानि पापानि क्रमशः वृद्धि यान्ति। यदि तेषां धनिकानां कापि हानिर्जायते तदा तत्र ते वधूनां पीड़नं प्रारभते। भावनावशात् कन्या पक्षस्य सम्बन्धिनः यदि किमपि समर्पयन्ति तदा तेन धनेन तेषां बुभुक्षा न समाप्नोति प्रत्यत दिनानुदिनं प्रवर्धते। धनस्य प्राप्तये च ते बधूनां सन्तापन कुर्वन्ति। भारतस्य पवित्रा विवाह प्रथासु प्रतिदिनं वर्धमानानि दुर्वृत्तानि दृष्ट्वा यौतुकं अतीव कलङ्क पूर्णं अस्ति। यदियौतुकस्य विधानं जनमानसात् न समाप्नोति तदा स्त्रीणां सुन्दरं सुखमयं गृह-

स्थ-जीवनं असम्भवं भविष्यति। इदं तु अतीव विडम्बना पूर्णं यत् या श्वश्रुः स्वयमपि एका वधूः आसीत् सा अपि स्वपुत्रवध्वा उत्क्लेशने प्रमुखं कार्यं करोति। समाचारान् अवलोक्य ननादृणां श्वश्रूणां च कृत्यानि अतीव गर्हितानि जातानि। अनेन यौतुकस्य कालताण्डवेन अद्यतनः समाजः अतीव प्रताड़ितो वर्तते आतंकितश्च। अपेक्षा वर्तते एवं विधानां विधानानां दण्डविधीनां च यैः लोकमानसात् निःशेषतां यायात् यौतुकस्य प्रवृत्तिः। एवमेव कन्यानां पुरुषाणां च सम्मानस्य स्थापना सम्भवति नान्यथा। उल्लेखनीय मत्र वर्तते यत् अहमपि अयौतुकेन विवाहबन्धने सुबद्धाऽऽसम्, तदा प्रभृति सुचारु रूपेण प्रचलति दाम्पत्यजीवनम्।

अद्यतनस्य समाजस्य अपेक्षासु शिक्षितानां कन्यानां शिक्षितानां तु पुरुषाणां स्थितिः आवश्यकीया अस्ति। सुशिक्षिता कन्यापरिणयात् पश्चात् महार्घं स्वजीवनं यदि यौतुकस्य कलंकाय विवशा भूत्वा समर्पयन्ति तदा इदं अतीव निन्दनीयं वर्तते। वेदेषु अपत्य नाम्ना पुत्राः पुत्र्यश्च समाना वर्णिता। अद्यतन विश्वसंविधानमपि वेदमतानुकूलमेव वर्तते। अतः स्त्रीणां समर्पित जीवनानां रक्षार्थं प्रतिष्ठार्थं च इदमावश्यकं वर्तते यत् विवाह प्रथाभ्यः निर्मूलितं स्यात यौतुकम्।

— राजकीय उच्च शिक्षालय
रजाना तहसील रेणुका जिला सिरमौर (हि. प्र.)

## पाठकाः प्रार्थ्यन्ते

मान्याः !

नववर्षारम्भो जातः नववर्ष शुल्कः प्रेष्यः। पत्रप्रेषणेनापि वार्षिकशुल्कप्रेषणार्थं प्रार्थना कृता किन्तु स्वल्पैरेव महानुभावैः शुल्कप्रेषणं कृतम्। अतः सविनयं प्रार्थ्यते यत् शीघ्रमेव शुल्कप्रेषणेन सहायता क्रियताम्।

——— सम्पादकः

# भाग्यवन्तः रमन्ते

जगति परमभाग्यैः प्राप्यते तत्वज्ञानं
सततरत मनुष्याः लक्ष्यसिद्धिं लभन्ते
सविधकृतप्रयत्नाः मोदयन्ते धरित्रीं
लघुतर ननु जीवः शत्रवो विश्वबाधाः ॥

जयतु - जयतु धन्याः मानवाः ते प्रवीणाः
अविचलमतिवन्तः कीर्तिवन्तः प्रतापाः ।
जितहृदयविकाराः कर्मधर्मे रताः ये
प्रतिदिन विकसन्तः प्रेरणापुष्पगन्धम् ॥

मुदितयशपताका नर्तते भूरि श्वेता
अविरलशुभ कर्मैः यान्ति देवत्वभावं ।
किल भवति भविष्यं मार्जितं लाभयुक्तं
गुणिगण-वरमालाः द्योतयन्ते वरेण्याः ॥

त्रिभुवनमुपकारैः प्रीणिताः मानवाः वै
स्वरचितमधुभावैः मोदिताः सन्ति सर्वे ।
सकलबुधवरिष्ठैः वन्दनीया ऽर्चनीयाः,
गतिमय खलु विश्वे भाग्यवन्तः रमन्ते ॥

— कीर्तिवल्लभ शक्टा
मण्डलक चम्पावत
पिथौराजगढ़ (उ. प्र.)



# "राष्ट्रीय एकतायां संस्कृत–योगदानम्"

जियालाल शर्मा शास्त्री एम. ए.



भारतं अनादि कालात् शान्तेः, अहिंसायाः एकतायाः च अधिष्ठाता वर्तते । अत्र महर्षिमनुः, आदिगुरुः शंकराचार्यः, स्वामीदयानन्दः महात्मागान्धी आदयः अनेके महापुरुषाः जनिम् अलभन्त । ये न तु भारतमेव अपितु अशेषविश्व शान्तेः, अहिंसायाः, अखण्डतायाः च पाठं अपाठयन् । भारतस्य राष्ट्रीय - एकतायाम् अपि एतेषां महापुरुषाणां महद् योगदानमासीत् । अस्माकं देशः राष्ट्रीयैकतायाः अनुपमः दृष्टांतः अस्ति । अनेकविध विचाराणामनन्तरमपि सम्पूर्णं राष्ट्रमेकतायाः सूत्रे अनुस्यूतमस्ति । इत्थं अस्माकं देशः महत् राष्ट्रं विद्यते । भारतस्य महिमायाः ज्ञानं कुर्वन् पुराणेषु सम्यगेवोक्तम् ।

"गायन्ति देवाः किल गीतकानि, धन्यास्तु ते भारतभूमि भागे ।
स्वर्गापवर्गास्पदहेतुभूते, भवन्ति भूयः पुरुषाः सुरत्वात् ।।"

भारतस्य राष्ट्रीय एकतायां संस्कृतभाषायाः विशेषयोगदानं वर्तते । संस्कृतभाषा राष्ट्रस्य एकतायैआत्मनः भूमिकां निर्वहति राष्ट्रं चेत् संस्कृत विरहितं क्रियते तदा भारतस्य दशा आत्माविहीनं शरीरमिव जायते । यथा मानवस्य शरीरे आत्मा चेतनायाः सञ्चारं करोति तथैव संस्कृत भाषा राष्ट्र - जनमानसे भावात्मक एकतायाः देशानुरागस्य पारस्परिकसमन्वयस्य, विश्वबन्धुत्वभावनायाश्च सञ्चारं करोति । भारते संस्कृतमेव एका एतादृशी भाषा विद्यते या राष्ट्रं एकतायाः सूत्रे निबद्धुं शक्नोति ।

भारतवर्षे युगे युगे अनेके संस्कृत विद्वांसः जाताः । यैः राष्ट्रीय एकतां दृढयितुं अनेके प्रयासाः कृताः । केरलेषु कालटि नाम्नि ग्रामे समुत्पन्नः आदिगुरु शंकराचार्यः राष्ट्रं एकीकरणाय चतुर्षु दिक्षु—

द्वारकायां, बदर्यां, जगन्नाथपुर्यां, शृङ्गेर्यां च-चतुरः मठान् समस्थापयत। यत् देशस्य एकतायै महत्तमं कार्यमासीत् चतुर्णाम् मठानामटनं कृत्वा जनानां हृदयेषु विराटराष्ट्रस्य स्वरूप समुपस्थितं भवति। एवं जनानां पारस्परिक विचारविनिमयेन राष्ट्रीय एकतायाः धारणा दृढ़ा जायते।

भारतस्य वैदिक-वाङ्मयेऽपि पदे पदे पारस्परिक समन्वयस्य, राष्ट्रानुरागस्य च अनेके दृष्टान्ताः उपलभ्यन्ते। ऋग्वेदे एकस्मिन् स्थले एकीभूय राष्ट्रचिन्तनस्य अतीव सारगर्भितम् उपदेशं प्रयच्छता ऋषिणा प्रोक्तम्—

सङ्गच्छध्वं संवदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथापूर्वे सञ्जानाना उपासते ।।

अन्यस्मिन् स्थले कठोपनिषदि सहभावनाया दृष्टान्तः अतीव शिक्षाप्रदः वर्तते—

सह नाववतु सह नौ भुनक्तु सहवीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु, मा विद्विषावहे ।।

एवं वयम् पश्यामः यत् सम्पूर्णः संस्कृत वाङ्मयः राष्ट्रीय भावनया परिपूर्णः विद्यते। अथर्ववेदस्य पृथिवीसूक्ते मातृभूमिं प्रति मानवस्य श्रद्धया परिपूर्णः प्रणामभावः इत्थं प्रकटितः-

माता भूमिः पुत्रोऽहं पृथिव्याः ।
नमो मात्रे पृथिव्यै, नमो मात्रे पृथिव्यै ।

एषः प्रणाम भाव एव राष्ट्र-राष्ट्रवासिनां मध्ये एकतायाः दृढ़-बन्धनम् अस्ति। अस्यां दृढ़भित्तावेव राष्ट्रीय एकतायाः भवनं निर्मीयते।

संस्कृतलौकिकसाहित्येऽपि राष्ट्रीयएकतायाः भावाः निहिताः सन्ति। रामायणं महाभारतं च भारतीयसंस्कृतेः अखण्डतायाश्च आधारस्तम्भौ स्तः। देशस्य सर्वेषां सम्प्रदायानां, धर्माणां जातीनाञ्च जना समभावेन एतयोर्ग्रन्थयोः सम्मानं कुर्वन्ति। दूरदर्शनोपरि अनयोः ग्रन्थयोः प्रसारणात् जनमानसे राष्ट्रीय एकतायाः भावाः सुदृढ़ाः जाताः।

अस्माकं देशे जन्मनः प्रभृतिः मृत्युपर्यन्तं षोडशसंस्काराणां परम्परा हिमालयात् कन्याकुमारीपर्यन्तं समानरूपेण प्रचलिता वर्तते । एषा परम्परा शत प्रतिशतं वैज्ञानिका वर्तते । एषा सम्पूर्णा परम्परा संस्कृत भाषया एव सम्पन्ना भवति ।

इत्थम् अनेकेषु राज्येषु विभक्तमेतत् विशालराष्ट्रं संस्कृत भाषा-सांस्कृतिक-भावात्मक दृष्ट्याः अखण्डतायाः दृढतमे सूत्रे बध्नाति । अस्माकं देशे संस्कृतस्य स्वीयं वैशिष्ट्यम् वर्तते । भारतस्य सर्वाः प्रान्तीय भाषाः संस्कृतेनैव जीवन्ति । चेत् एताः भाषाः संस्कृत शब्द रहिताः क्रियन्ते, तर्हि एताः स्वतन्त्ररूपेण वाक्यनिर्माणं नैव कर्तुं शक्नुवन्ति । भारतस्य स्वतन्त्रतायाः विचारः अपि मुम्बई नगर्यामेकस्मिन् संस्कृतविद्यालये एव कृतः । "जननीजन्मभूमिश्च स्वर्गादपि गरीयसी"- एषः स्वमातृभूमेरनुरागस्य महान् सन्देशः संस्कृत भाषायामेव विद्यते ।

अद्य देशस्य अनेकेषु क्षेत्रेषु अनेक विधाः विवादाः हिंसा च व्याप्ता । चेत् स्वाधीनता प्राप्तिकालादेव संस्कृताय एतस्य प्राचीनं सम्मान प्रदाय सर्वेषु पाठ्यक्रमेषु तस्यअनिवार्यशिक्षणव्यवस्था क्रियते तर्हि अद्य भाषा विवादाः, क्षेत्रविवादाः च भारतस्य अखण्डतायाः मार्गे बाधकाः नैव भवितुं शक्नुवन्ति । न जाने संस्कृत भाषायामेतादृशं किन्तत्त्वं विद्यते यत् अध्ययन मात्रेणैव मानवमनुशासनपालनाय पावन जीवनयापनाय च प्रेरयति ।

स्वर्गीयः लोकप्रिय नेत्रा जवाहरलाल नेहरू महाभागेन राष्ट्रीयैकतायां संस्कृतस्य योगदानं विषये उक्तम् यत् - "भारतस्य इतिहासे संस्कृतेन या भूमिका वोढाः सा विश्वस्य कस्यापि भाषाया कस्यापि राष्ट्रस्य इतिहासे नैव स्थिता । संस्कृत भाषायां न केवलम् उच्चसाहित्यस्य रचना कृता अपितु अनेकेषु राज्येषु विभक्तं राष्ट्रं एकीकरणाय अपि कार्यं कृतम् । अहं तु एतत् विचिन्त्य चकितः भवामि चेद् भारतीयैः रामायण महाभारत गीतादीनां उपदेशाः विस्मृताः तर्हि न जाने देशस्य कीदृशं पतनं भविष्यति । अस्माकं संस्कृतिः नंक्ष्यतिः अस्माकं ता सर्वाः अपि विशेषताः विनंक्ष्यन्ति याभिः विश्वे अस्माक-

मस्तित्वं विद्यते । तदा भारतं भारतं न स्थास्यति । एकता खण्डिता भविष्यति ।"

अद्य भारतस्य विविधप्रान्तेषु क्षेत्रवादः भाषाविवादः सदृशाः अनेकाः समस्याः दिनानुदिनं प्रवर्धन्ते । स्थाने - स्थाने साम्प्रदायिक एवं जातीय उपद्रवाः भवन्ति । पञ्जाब कश्मीर प्रान्तयोः हिंसायाः ताण्डवनृत्यं भवति । मानवः मानवरक्तस्य तृषितः जातः । सर्वत्र अशान्तिः, हिंसा, भ्रष्टाचारः, उत्कोचभाव स्वार्थपरायणता च व्याप्ता वर्तते । एतासां सर्वासाम् समस्यानां समाधानं तदैव भवितुं शक्नोति यदा भारतीया अध्यात्मविद्यायाः मूल्यानि बोधिष्यन्ति । वेदानां पुराणानाञ्च शिक्षाः अनुपालयिष्यन्ति । एतत् सर्वं तदैव भवितुं शक्नोति यदा सर्वे भारतीयाः संस्कृतस्य अध्ययनं करिष्यन्ति । तदैव जनाः संस्कृतस्य एतदुद्घोषं घोषयिष्यन्ति– "भ्रातरो मनुजाः सर्वे स्वदेशो भुवनत्रयम् ।" तदैव राष्ट्रस्य एकता अक्षुण्णा भविता । तदैव च वयं कथयितुं शक्ष्याम —

धन्योऽयं भारतो देश, धन्येयं सुरभारती ।
तत्पूजकाः वयं धन्याः, अहो धन्या परम्परा ।

— रा० उ० पा० बोगधार
जिला सिरमौर
नौहराधार (हि० प्र०) १७३१०४



"जननी जन्मभूमिश्च
स्वर्गादपि गरीयसी ॥"

——

# आदिकाव्ये प्रक्षिप्तांशनिर्णयः

डा० सतीशकुमार शर्मा
आचार्यद्वय, एम. ए., पी. एच. डी.
प्राप्त: स्वर्णपदक:



रामायणे कथानामध्ययनेन ज्ञायते यत् रामायणे काले -काले सतत-प्रक्षेपाः सञ्जाताः । रामायणे प्रक्षिप्तांशमिश्रणं महाभारतस्य वर्तमान-शतसाहस्रीरूपाद् पूर्वमेवाभवत् १ । अधुना बाल्मीकिकृतरामायणसंहिता चतुर्विंशतिसहस्रात्मिका सप्तकाण्डात्मिका च स्वीकृता । याकोबीमहोदयस्य मतानुसारेण बाल्मीकिरामायणे त्वयोध्याकाण्डादारभ्य युद्धकाण्डपर्यन्तं पञ्चकाण्डान्येवासन् २ । बालोत्तरकाण्डे प्रक्षिप्ते स्तः । मैक्डानलमहोदयेनाप्येतदेव सुस्पष्टीकृतं यदेषा नैकस्य कवेः रचना ३ । भारतीयविदुषां मतानुसारेणापि सततप्रक्षिप्यमाणेषु श्लोकेषु वृद्धिः सञ्जाताः । प्रक्षेपाणामाकलनन्न सरलकार्यम् । बालकाण्डन्न सर्वथा प्रक्षिप्तं प्रतीयते । सप्तमं हि काण्डं मुख्यकथाऽन्वितोपाख्यानबहुलम् । एतदनुमीयते यदुत्तरकाण्डस्य मिश्रणं रामायणे पश्चाज्जातम् । अत एव याकोबीमहोदयेन पर्यवसितं यद् द्वितीयादिषष्ठान्तकाण्डकथैव मुख्य-रामायणकथा । आद्यन्त्यकाण्डकथया सह काश्चिन्मुख्यकथान्तर्गताः कथाः तास्तु प्रक्षिप्ता एव ४ । अत्र कानिचिद् प्रमाणानि बालोत्तर-काण्डयोः प्रक्षेपत्वे । प्रथमे बालकाण्डस्य प्रक्षेपत्वपरिचयः ।

---

१ राजवंशसहाय हीरा संस्कृत साहित्य का बृहद् इतिहास, पृ० १५३

२ याकोबी, दस रामायण, पृ० ४५

३ मैक्डानल ए. ए. History of Sanskrit litrature, पृ० २०६

४ याकोबी, पूर्वोक्त ग्रन्थम्, पृ० ८६, १२७

## बालकाण्डस्य प्रक्षेपत्वाप्रक्षेपत्वे प्रमाणानि

मैक्डानलयाकोवीकीथ भृतयः पाश्चात्यविद्वान्सः बालकाण्डमपि सर्वथा प्रक्षिप्तं मन्यन्ते। केषाञ्चिद्भारतीयविदुषामपि एतावदेवोद्घोषो वर्तते ५। एतत्तु गड्डालिकाप्रवाहवदेव। तैर्निम्नोक्तप्रमाणानि प्रदर्शितानि बालकाण्डस्य प्रक्षेपत्वप्रतिपादने।

१ बालकाण्डस्य शैलीभाषे सप्तमकाण्डवद् दृश्येते।

२ अस्यार्धभागस्य मुख्यकथया सहासम्बद्धता।

३ बालकाण्डे लक्ष्मणोर्मिलयोर्विवाहवर्णनं विद्यते ६। परमरण्यकाण्डे लक्ष्मणोऽकृतदारः प्रतिपादितः ७।

४ बालोत्तरकाण्डयोः रामस्य विष्णुरूपं दृश्यते।

५ आख्यानोपाख्यानेषु स्वाभाविककथाया अवरोधः।

परं बालकाण्डस्य प्रक्षेपत्वं न युक्तिसंगतम्। बालकाण्डे मौलिकता मुख्यकथासम्बद्धता च दृश्यते।

अत्र प्रमाणानि।

## बालकाण्डं न सर्वथा प्रक्षिप्तकाण्डम् :-

१ बालकाण्डे प्रक्षिप्तांशानां शैली भिन्ना भवितुं शक्यते न सर्वत्र।

२ इदं सत्यं यत्बालकाण्डे आख्यानानि कथासम्बद्धानि परं मुख्याधिकारिककथासम्बद्धांशः प्रक्षिप्तः भवितुं नार्हति। अत्रोपलब्धरामजन्मविवाहादिवर्णनं कथासम्बद्धम्।

३ अरण्यकाण्डे लक्ष्मणोऽकृतदारः प्रतिपादितः। अस्यायमर्थः 'अकृतदारः' न स्वीकृता दारा येन सः ८। अरण्ये लक्ष्मणेन सह तस्य भार्या उर्मिला नासीत्। 'अकृतदारः' शब्दस्यार्थः अविवाहितः टीकाकारैरपि न प्रतिपादितम्।

---

५ हंसराज अग्रवालः, संस्कृतसाहित्येतिहासः प्रथमो भागः पृ० २७

६ रा० १-७३ सर्गः (सर्वत्र अमृतकतक व्याख्या युतं मैसूर संस्करणम्)

७ तत्रैव, ३·१८-३ अथवा कोऽपि दक्षिणात्य संस्करणः।

८ तत्रैव, ३-१८-३ तिलकगोविन्दराजीयामृतकतकानां टीकावलोकनीया।

४ न केवलं बालोत्तरकाण्डयोरपितिवतरकाण्डेष्वपि रामस्य विष्णु रूपं दृश्यते ९। सीतायाः वह्निप्रवेशसमये सर्वेषां देवानामुपस्थिति र्वर्णिता। अयोध्याकाण्डस्यारम्भे युद्धकाण्डस्य चान्ते रामस्य विष्णुरूपं दृश्यते। रामस्य देवरूपमनेकत्र प्रतिपादितम्। विराधशापविमोचने, मारीचस्य राममहात्म्यप्रतिपादने, दुन्दुभिराक्षसस्यास्थिपञ्जरप्रक्षेपणे, कवन्धस्य शापविमोचने रामस्य देवत्वं सुस्पष्टम् १०।

५ आख्यानैर्कथाया अवरोधो न जायते। इतरकाण्डेष्वपि विभिन्नानि कथाख्यानानि सन्ति। यथा गंगावतरणम् अगस्त्यवातापील्वलाख्यानं, सुरभिधेनुः सुरसाकबन्धशापादीनि। आख्यानैर्न मुख्यकथावरोधोऽपितु एतानि प्रासंगिककथारूपाणि।

## बालकाण्डस्य मूलकथया सह सम्बद्धता:-

बालकाण्डे मूलकथया सुसम्बद्धप्रसंगानामाधिक्यम्। तत्र प्रमाणानि।

१ 'मा निषाद प्रतिष्ठां त्वमगमः शाश्वती समा।
यत्क्रौञ्चमिथुनादेकोवधी काममोहितम्।' ११

अस्य पद्यस्य वाल्मीके मुखान्निसरणं सुनिश्चितम्। यदि बालकाण्डं प्रक्षिप्तं स्यात् तर्हि पद्यस्यास्य प्रक्षिप्तता प निश्चिता भविष्यति। आनन्दवर्द्धनाचार्येणास्य पद्यस्य रसध्वनेः स्थापनार्थं प्रामाण्यं स्वीकृतम्।

"निषाद विद्धाण्डजदर्शनोत्थः शोकः श्लोकत्वमागतः। १२

कालिदासेनाप्येवमेव प्रतिपादितं रघुवंशे।

२ मारीचेनारण्यकाण्डे रावणेन सीताहरणार्थं प्रार्थ्यमाणे रामस्य माहात्म्यं वर्णितम्। विश्वमित्रस्य यज्ञे दण्डकारण्ये रामकृतपराक्रमं मारीचेन रावणाय कथितम्

तं तदा दण्डकारण्ये यज्ञमुद्दिश्यदीक्षितम्।
वभूवोपस्थितो रामश्चित्रं विस्फारयन्धनुः॥ ३-३८-१३

---

९ तत्रैव, २-१-७, ६-१०५-५-२८
१० तत्रैव, २-१-७, २-३-४५, ६-११७ ६-१०५, ३-४, ३-११, २-७४
११ तत्रैव, १-२-१५
१२ ध्वन्यालोकः, १-५

अवजानन्नहं मोहाद्बालोऽयमिति राघवम् ।
विश्वामित्रस्य तां वेदिमभ्यधाव कृतत्वरः ।
तेनमुक्तस्ततो वाणः शितः शत्रुनिबर्हणः ।
तेनाहं ताडितः क्षिप्तः समुद्रे शतयोजने ।। ३-३८-१८-१९

मारीचरामयोर्युद्धवर्णनं विश्वामित्रस्य यज्ञे बालकाण्डे वर्तते । १३
रामचरित्रस्य स्थलमिदं मुख्यकथासुसंबद्धमपि । बालकाण्डस्य प्रक्षेपत्वे अस्यापि प्रक्षिप्तता भविष्यति ।

३ अयोध्याकाण्डे रामस्याभिषेकाय निश्चिते समये पुष्य नक्षत्रं, कर्कलग्ने गुरुचन्द्रयोः स्थिति जन्मलग्नवत् प्रतिपादिता ।

उदिते विमले सूर्ये पुष्ये चाभ्यागतेऽहनि ।
लग्ने कर्कटके प्राप्ते जन्मरामस्य च स्थिते ।।
अभिषेकाय रामस्य द्विजेन्द्रैः रूपकल्पितम् । २-१५-३-४
अद्य बार्हस्पतः श्रीमान्युक्तः पुष्यो न राघवः ।। २-२६-९

जन्मकालिक ग्रहस्थिते वर्णनं बालकाण्डे उपलभ्यते । यथा —

ततश्च द्वादशे मासे चैत्रे नावमिके तिथौ ।
नक्षत्रेऽदिति दैवत्ये स्वोच्चसंस्थेषु पञ्चसु ।।
ग्रहेषु कर्कटे लग्ने वाक्पतीन्दुना सह । १-१८-८

जन्मकालिकग्रहाणामध्ययनमवश्यमेव समकालीन वाल्मीकिना कृतम् । यदि बालकाण्डं प्रक्षिप्तं स्यात् तर्हि ग्रहस्थितिलेखनकल्पनापि सुनिश्चिता भविता । वाल्मीकिना तु लक्ष्मणभरतशत्रुघ्नानां जन्मकालिका ग्रह-स्थिति प्रतिपादिता । तद्यथा—

"पुष्ये जातस्तु भरतो मीनलग्ने प्रसन्नधीः । १-१८-१३
सार्पे जातौ च सौमित्रि कुलीरेऽभ्युदिते । १-१८-१५

४ रामायणे रामायणस्य विषये प्रतिपादितम्—

अत्र षट्काण्डानां समूहता प्रतिपादिता । अतः निश्चयेन वक्तुं शक्यते यन्मूलरामायणे षट्काण्डान्यासन् । उत्तरकाण्डस्य पश्चान्मिश्रणं जातम् । १४ — क्रमशः

---

१३ रा, १-६० सर्गः,

१४ विस्तरार्थं द्रष्टव्यः मत्कृतग्रन्थः, "रामायणगत वैदिक सामग्री: एक समालोचनात्मक अध्ययन, पृ० ६—१२
मया पुनर्निमाणाधीन ग्रन्थे 'आदिकवि और रामायण'
इत्यस्मिन् पुनरनुशीलनं क्रियते ।



# संस्कृत सम्मेलनम्

(विजयवाटिकायाम्)

१९९१ फिब्रवरी १६, १७ दिनांकयोः विश्वसंस्कृत प्रतिष्ठानस्य आन्ध्रप्रदेशशाखा दिनद्वय कार्यक्रमान्वितं संस्कृतसम्मेलनं निरवहत्, यत्र पञ्चषाणां मण्डलानां संस्कृतपण्डिताः प्रतिनिधय श्चाहत्य द्विशताधिका स्समभिलन् ।

दिनद्वयेऽपि आदिमध्यावसानेषु मुख्यातिथित्वेन कार्यं निर्वाहकत्वेन च बहवः प्रमुखाः भागमगृह्णन् । स्वागतसमितेः औदार्येण सम्मिलितानां प्रतिनिधीनां भोजनवसतिसुविधादिकं निर्वर्तितम् ।

तत्र प्रथमदिनकार्यक्रमः आन्ध्रप्रदेश संस्कृतप्रतिष्ठानस्य अध्यक्षेण श्रीमता मुडुम्बै राघवाचार्यं महोदयेन पताकाविष्करण पुरस्सरं प्रारम्भि।

प्रात मध्याह्न सायं समयेषु तत्तत्समयोचिताः कार्यक्रमा स्समायोजिताः चर्चागोष्ठयः संस्कृतहरिकथा, नाटकप्रदर्शनं, सम्मेलन संचिकाविष्करणं, कविता गोष्ठी, अष्टावधानम् महाशोभायात्रा, सार्वजनिकमहासभा, सांस्कृतिककार्यक्रमः इत्येवंविधैः विविधकार्यक्रमैः सम्मेलनोत्सव स्सम्पन्नः।

प्रथमदिने तावत् प्रातः कार्यक्रमे ज्योतिः प्रज्वालनं वाग्देव्याः पुष्पमालालंकरणम् स्वागतसमित्यध्यक्षस्य श्री कं वे. गोपालराय महोदयस्य स्वागतभाषणम्, परमहंस परिव्राजकाचार्य श्री श्री श्रीमद्विदण्डि श्री मन्नारायण रामानुजजीयर स्वामिना आशीरनुग्रहभाषणम्, मुख्यातिथेः श्री जंध्याल शंकर महोदयस्य बिजयवाटिकामहानगरपालिकाध्यक्षस्य संस्कृतप्रचारोपयुक्ताभिभाषणं च संवृत्तम् ।

मध्याह्नकार्यक्रमे 'सरलसंस्कृतबोधनम्, दशदिन संस्कृत शिक्षण - शिविर निर्वहणम्, संस्कृतं विश्वभाषा इति त्रीन् विषयानधिकृत्य श्री वेंपटि कुटुम्बशास्त्रिण: श्रीमत: क. वें रामकृष्णमाचार्यस्य च निर्वाहकत्वेन सम्मिलितपण्डितानां भाषण पुरस्सराः प्रस्तावा: पारिता: । तदनन्तर द्वितीयगोष्ठ्यां पाठशालासु कलाशालासु च पण्डितानां पाठ्यानां च विषये क्लेशा: निवारणोपाया श्चेति विषय मधिकृत्य श्रीवेदुल सुब्रह्मण्यशर्म महोदयस्य, श्री सूरं श्रीनिवासमहाभागस्य च निर्वाहकत्वेन पण्डितप्रतिनिधीनां भाषणानि प्रस्तावा श्च समपद्यन्त ।

सायंकार्यक्रमे तृतीयगोष्ठ्यां श्री रोम्पिचेलं श्रीनिवासा चार्यस्य श्री नीलंराजु वेंकटसुब्बय्य महाशयस्य, श्रीमुदिगोण्ड शिवरामकृष्ण शास्त्रिमहोदयस्य च 'संस्कृते कला:' इति विषय मधिकृत्य भाषणान्यभवन् तदनन्तरं श्रीमत: नल्लान् चक्रवर्ति कृष्णामाचार्य महोदयस्य संस्कृते सुन्दरकाण्डकथा (हरिकथा) गानं सम्पन्नम् । कोव्वूरु संस्कृत-कलाशालाच्छात्रै: अग्नि दूतं वृणीमहे इति संस्कृतनाटिका प्रदर्शिता ।

द्वितीयदिने प्रात: कार्यक्रमे कवितागोष्ठी समायोजिता श्रीचेरुवु सूर्यनारायणशास्त्रि महोदयस्य संस्कृते अष्टावधानं समपद्यत । श्रीवेंपटि कुटुम्बशास्त्रि महोदयेन संस्कृतसम्मिलनसञ्चिका आविष्कृता यत्र श्रीके नलचक्रवर्तिमहाशय: रा. सं. विद्यापीठस्य व्याख्याता अध्यक्ष्यं स्वीचकार तदनन्तरं प्रवृत्तायां गोष्ठ्यां 'स्वच्छन्द संस्थानां परीक्षाणां प्रचारकाणां अनुभवा:' इति विषय मधिकृत्य श्रीमत: आसूर् वरदराजमहाशयस्य श्री उपद्रष्ट वेंकटकृष्णय्य महोदयस्य, श्री पीला शिवरामकृष्ण शास्त्रि महोदयस्य च भाषणानि प्रस्तावा श्च समभूवन् । इयं च गोष्ठी चल्ला लक्ष्मीनारायण महोदयस्य 'वाग्देवी' पत्रिका सम्पादकस्य निर्वहणेन सम्पन्ना । तदनन्तरं स्वधर्मसमैक्यविज्ञान विश्वशान्त्यादिभ्य: संस्कृतम् शास्त्रेषु संस्कृतम् 'संस्कृते प्रजासुखसाधनशास्त्राणि' इति विषयानधिकृत्य श्री विश्वनाथगोपालशास्त्रिण:, श्री प्रबल सुब्रह्मण्यशर्मण: श्रीमत: रोम्पिचेल श्रीनिवासाचार्यस्य च निर्वहणेन भाषणानि प्रवृत्तानि ।

मध्याह्न कार्यक्रमे नूतनकार्यवर्ग निर्वाचनम् सर्वगोष्ठी निर्णयसमीक्षणम्, महाशोभायात्रा च प्रावर्तन्त । सायंकालीन कार्यक्रमे सार्वजनिक महासभा श्रीमतिरूमल प. वें. कूर्माचार्यमहो दयस्य पूर्वशासनमण्डल-

सभ्यस्य, अध्यक्ष्येण प्रचलिता यत्र श्री चिन्तलपाटि शिवरामकृष्ण महोदयस्य प्रारम्भोपन्यासः मुख्यातिथेः श्री कोट वेंकटसत्यनारायणमूर्ति महाशयस्य भाषणं च प्रवर्तत। सांस्कृतिककार्यक्रमे अमरधीवर जानपदनृत्यानि, शिशु विद्यामन्दिर बालिकाभिः प्रदर्शितानि। श्री चल्ला लक्ष्मीनारायणमहाभागस्य वन्दन समर्पणेन दिनद्वयकार्यक्रमान्वितः संस्कृतसम्मेलनोत्सवः समाप्तः। दिनद्वयेऽपि कार्यक्रमनिर्देशन तात्कालिक कार्यक्रमप्रपूरणं तन्निरूपणं च वि सं प्रतिष्ठानस्य आँ प्र. शाखा कार्याध्यक्षः श्री दोर्बलि प्रभाकरशर्मा महोदयो निरवहत्। प्रमुखास्सर्वेऽपि ज्ञापिकाभिः सम्मेलनस्ञ्चिकाभिश्च सभाजिताः।

बहुभिः प्रमुखैः पण्डितैः गोष्ठीनिर्वाहकैः विविध सांस्कृतिक कार्यकर्तृभिश्च वि. स. प्रतिष्ठानस्य आन्ध्रप्रदेशशाखयाऽऽयोजितं संस्कृतसम्मेलनं सर्वथा सम्पन्नतां गत मिति सुवचम्।

— 'जयतु संस्कृतं - जयतु संस्कृतिः' — (गैर्वाणी)



## सूचना

प्रयागस्थगङ्गानाथझा केन्द्रीयसंस्कृतविद्यापीठस्य पुस्तकालयेऽस्माभिरेकः आधुनिकसंस्कृतसाहित्यकक्षः"स्थापयितु प्रयासः आरब्धः तस्मिन्कक्षेऽभिनवानां संस्कृतसाहित्यकाराणां समग्राणां कृतीनां यथासम्भवं सङ्ग्रहो भविष्यति। एतेन संस्कृतक्षेत्रे साम्प्रतिके युगे कियान्निर्माणाध्यवसायः सम्प्रवर्तत इति जिज्ञासव सरलतया ज्ञातुमर्हन्ति। विश्वविद्यालयेषु आधुनिकं संस्कृतसाहित्य विषया कृत्य शोधकार्यं प्रकुर्वाणानां शोधछात्राणामपि कृते तादृशः संग्रह उपकाराय सम्पत्स्यते।

एतस्मिन्नेव क्रमेऽस्माभिर्नवीनाः साहित्यकाराः सम्प्रार्थ्यन्ते यत्ते स्वीयानां कृतीनां सम्प्रेषणेन संसूचनेन वाऽस्माननुगृह्णन्तु अपि च येषां मविधे ख्रिस्तीयोनविंश शताब्द्यां विंशशताब्द्यां वा संस्कृतकवीनां रचनाः सुरक्षिता सन्ति ते कृपयाऽस्माननुगृह्णन्तु तेषां ग्रन्थानां चित्रप्रतिलिपिसम्प्रेषणेनेति।

निवेदकः—
प्राचार्यः गंगानाथ झा केन्द्रियसंस्कृत विद्यापीठ, चन्द्रशेखरआजादपार्क इलाहाबाद उ० प्र०

# श्री मद्भागवतपुराणयज्ञः

१९६१ ख्रीष्टाब्दीयफरवरी मासान्ते मार्चमासारम्भे च शिमला-मण्डलान्तर्गतचीखुर ग्रामे महीयान् श्रीमद्भागवत पुराणयज्ञः समजनि । अत्र श्री बालकरामशर्मणो गृहे आचार्य केशव शर्मणः, दिव्यज्योतिषः सम्पादकस्य च प्रवाचकत्वे समारोहो ऽयं सम्पन्नः ।

श्री केशवशर्माणं समारोहस्थानं नेतुं यजमानः स्वयं, प्राध्यापकः श्री केशवराम शर्मा, आचार्यरामानन्द शर्मा चैते सर्वे महानुभावाः संस्कृतशोधसंस्थानमायाताः। दिनद्वयाभ्यां हिमपातो जायमानः आसीत् । परमद्य किञ्चित् - शोभनदिनमासीत् प्रभाते । यथैव चतुर्वादनवेलायां यानं मशोबरातः प्राचलत् - भगवतः सूर्यस्य प्रकाशः परितः सौन्दर्यं प्रासारयत् ।

कारयानं स्वयं यजमानश्चालयति स्म । परन्तु यथैव विश्वविख्यातं, हिमक्रीडास्थलं कुफरीं यानं प्राप्तम् तथैव पुनरपि हिमवर्षणमारब्धम् । कदाचिन्मेघेभ्यः प्रकाशं प्राक्षिपत् - कदाचिच्च पुनरपि परितोऽन्धकारः । एवं किल सूर्यमेघयोर्युद्धं पश्यन् सर्वोऽपि दलोऽयं चीखुरोपरि पर्वतशृङ्गमभिप्राप्तः । तत्रापि यद्यपि प्रखरपवनश्चलति स्म तथापि सर्वेषामुत्साहे न कापि न्यूनता आसीत् । कारयानात् - स्वल्प तमोऽन्तरालः पदातिभिर्लंघित आसीत् । ग्रामतः दलमेकं बहूनां जनानां शिविकामादाय मार्गं एवं प्रतीक्षमाणः आसीत् । "आचार्येण श्री केशवशर्मणा बहुशः प्रार्थितं यत्केवलं पुराणपुस्तकमेव शिविकया नेयम्, अहं पदातिरेव गमिष्यामि" परन्तु लोकान् कः प्रतिरोधयेत् । तेषामाग्रह आसीत् यत्पुराणग्रन्थस्तु शिरसि गमिष्यति यजमानस्य आचार्यश्च शिविकया एव नेष्यते । अनन्तरं सोलनस्थराजकीयस्नातकमहाविद्यालय-संस्कृतविभागाध्यक्षेण श्री केशवरामशर्मणा व्यासमहाभागः शिविकामारोढुं साग्रहं निवेदितः । इत्थं किल सर्वे सायं चीखुरं प्राप्ताः ।

सप्ताहपर्यन्तमत्र सत्सङ्गोऽभूत् । मध्ये एकदिवसाय पूज्याः आचार्य दिवाकरदत्त शर्ममहाभागाः अपि समारोहेऽस्मिन् समायाता आसन् । यदा श्री आचार्यचरणाः चीखुरं प्राप्ताः तदा सर्वैस्तत्रत्यजनैस्तेषां जयकारेणाकाशः गुंजायितः । चीखरेश्वर दर्शनमपि सर्वैः कृतम् ।

दैनिकी पूजा आचार्यरामानन्देन श्री नेहरु राजकीय संस्कृत महाविद्यालये प्राध्यापकेन निर्वोढा । आचार्य केशवरामेण सोलनस्थेनापि च जनसमुदायः सम्बोधितः ।

व्यासासनस्थेनाचार्यकेशवशर्मणा संस्कृतस्य महत्वमपि सत्सङ्गे काले २ प्रकाशितम् । एवमयं समारोहः सुसम्पन्नः । ——

# सम्पादकीयम्

## पञ्चाम्नु देशे संस्कृतमवसीदति

को नाम संस्कृतज्ञो न जानाति यत्पञ्जावप्रदेशेऽनेकग्रन्थानां निर्माणं महर्षिभिः कृतं संस्कृते। अनेकशास्त्रपण्डितैः स्वजन्मना प्रदेशोऽयं सनाथितः। अत्रैवाद्य संस्कृतस्य दुर्गतिर्भवति परन्तु कोऽपि संस्कृतज्ञो नाग्रे समायाति स्थितिसुधाराय ये केचन पुराणाः विद्वांसः आसन्,आचार्य विश्वनाथ सदृशाः आचार्यविश्वबन्धु समानाः तेषु केचनाद्य स्वर्याता ये केचन जीवन्ति तेऽपि वार्धक्यात् यत्र तत्र गमनं कर्तुं मान्दोलन म्वां संचालयितुमशक्ताः सन्ति।

नात्रापि सन्देहोऽस्ति यदेतेः एका पुष्टा शिष्यपरम्परा संस्थापिता आसीत्। क्व गतास्ते शिष्यप्रशिष्याः? किमु तेषु ऋषीणां रुधिरं न संचरति अथवा ते स्वार्थान्धाः केवलं यत्र तत्र भृतिं लब्धा स्थूलवेतनग्राहिणः किमपि संस्कृत भाषा प्रचाराय कर्तुं सर्वथा असमर्थाः जाताः, अथवा कर्तव्यविमुखाः सन्ति उतवा पाश्चात्य सभ्यता - झञ्झावातप्रताडिता दिशाविहीनाः जाताः? किमपि स्यात्परन्तु सर्वमिदं दुर्भाग्यपूर्णम्।

पञ्जाब प्रदेशे द्वित्राः राजकीयाः संस्कृत विद्यालया आसन्। पटियालायाँ नाभायाञ्च। कपूर्थलायान्तु पूर्वमेव संस्कृत-महाविद्यालयः समाप्तः। इदानीं विद्यालयाः विमौ अपि शासनेन समाप्तिं नीयमानौ स्त। किं कुर्वन्ति पञ्जाबस्य सिखाः हिन्दवो वा। उभयोरेव जीवनं संस्कृतभाषा। न कोपि राजनं तक दत्तोऽत्र शब्दमेकमपि उच्चारयति। पञ्जाबी भाषाया मूलं संस्कृतेएव संस्कृतं विना पञ्जाबी उर्दू भविष्यति। तेन चाधिका, पाकिस्थान समर्थका प्रादुर्भविष्यन्ति तत्र। तस्मात् कालोऽयं जागरणस्य।

अयि पञ्चाम्नु संस्कृतज्ञाः, साहसमादाय जागृता भवन्तु रक्षणीया तत्र सुरभारती तेनैव भारतीया संस्कृतिः भारतीया सन्ततिश्च सुरक्षिते भविष्यतः।

— केशव शर्मा



R. N. 6384/57

ल—33/एस. एम. / 10/91

# संस्थान के प्रकाशन



१. फलादेश कल्पतरुः (मूल संस्कृत में)
हिन्दी अंग्रेजी टीका सहित ४० वर्ष के अनुसन्धान और अनुभव पर आधारित जातकफल कहने का अनुपम ग्रन्थ ... — मू. ७०-००

२. संस्कृत कोशवाङ्मयम् (संस्कृत में)
संस्कृतकोशसाहित्यपर अनुसन्धानपूर्ण विवेचन ... ... मू. १७५-०

३. झञ्झा (संस्कृत में)
शेक्सपायर के द टैम्पेस्ट नाटक का सचित्र रूपान्तर ... मू. ५०-००

४. हिमाचलप्रदशे संस्कृतस्य प्रसारो विकासश्च (संस्कृत में)
हिमाचल में संस्कृत के प्रसार विकास की विस्तृत कहानी ... मू. ५०-००

५. वैजयन्ती (हिन्दी काव्य)
नवीन प्राचीन विचारधाराओं का गीतिमय समन्वय — मू. १५-००

६. सूनृता (संस्कृत काव्य)
आधुनिक गीतों में गुम्फित अनुपम उपहार — ... मू. २५-००

७. शक्तिसौरभ (हिन्दी में)
संस्कृत लेखिकाओं का इतिहास ... — ... मू. १५-००

८. विचारामृत (हिन्दी में)
आचार्य जी के विभिन्न विषयों पर जीवनोपयोगी लेख दो भाग — मू. १५-००

९ पथ्यापथ्यविनिर्णय
सं. हिं. टीका सहित आयुर्वेद का दुर्लभ ग्रन्थ ... ... मू. २०-००
(डाकव्यय सर्वत्र पृथक्)

सम्पर्क सूत्र :—
सचिव,

**संस्कृत शोध संस्थान**
भारती विहार मशोबरा
शिमला १७१००७ (हि. प्र.)

# दिव्यज्योतिः

संस्कृतस्य सचित्र मासिकम्



भारतस्य य आसीद्वै प्रधानामात्यशोभनः ।
स एव नारिबम्बेन घातितोऽस्तीति हा! ह हा! ।
मद्रासे मायि मासस्य एकविंशे दिने ततः ।
समस्तभारतश्चायं निमग्नो दुःखसागरे ॥

वर्षम् ३५ शिमला मयी, १९९१ अङ्कः

# विषयानुक्रमः



## दिव्यज्योतिः


हि० क० सं०भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकागतमुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति ।

हिमाचल प्रदेश– पंजाब-हरियाणा-जम्मूकश्मीर - मध्य प्रदेश–राजस्थान–महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।

पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरससुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकल कलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एवं लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्ग्लमानेन) प्रकाशितं भवति ।
पत्रस्य वार्षिक मूल्य ३५ रु० अर्धवार्षिकं १८ रु० एकस्याङ्कस्य च रु० २-५० भवति ।
वर्षारम्भः अक्तूबर—मासतः भवति ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति ।
ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोबरा, शिमला-१७१००७ हि० प्र०" इति संकेते धनादेशेन वा..शु. प्रेषणीयम् ।

## परिचयः

संस्थापकाः तथा आद्यसम्पादकाः आचार्यश्रीदिवाकरदत्त शर्माणः, — दूरभाषः 78459
राष्ट्रपतिसम्मानिताः
प्रधानसम्पादकः— आचार्य केशव शर्मा एम. ए., एम, फिल, साहित्यरत्नम् — „ 8 200
दिव्यज्योतिः कार्यालयः भारती विहारः, मशोबरा, शिमला-७ (हि. प्र.)
मुद्रकः प्रकाशकः—
भारतीमुद्रणालय भारती विहार, मशोबरा-१७१००७ शिमला (हि. प्र.)
स्वामीः- श्रीमती आचार्य रत्नकुमारी शर्मा

❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋ ❋

मई, १९९१ ज्येष्ठः २०४८ – वर्षम्–३५ अङ्कः ८
वार्षिक मूल्यम् ३५ रु०

गताङ्कादग्रे

# आदिकाव्ये प्रक्षिप्तांशनिर्णयः

डा० सतीशकुमार शर्मा
आचार्यद्वय, एम. ए., पी. एच. डी.
प्राप्तः स्वर्णपदकः



## उत्तरकाण्डस्य प्रक्षेपत्वे प्रमाणानि

१. उत्तरकाण्डस्य शैलीभाषे षट्काण्डशैलीभाषाभ्यामपकृष्येते। अत्र शैलीपौराणिकाख्यानयुता।

२. युद्धकाण्डस्यान्ते महाकाव्यसमाप्ते फलश्रुतिर्वर्णिता। तत्र काव्यसमाप्ति प्रतीयते।

३. उत्तरकाण्डस्य सामग्री मुख्यकथया सहासम्बद्धा:।

४. उत्तरकाण्ड पुनरुक्तिदोषं परस्परविरोधञ्च वर्तते। युद्धकाण्डे सुग्रीवविभीषणादेः प्रस्थान-वर्णनं वर्तते। १५ सप्तमे काण्डे पुनरयोध्यायामेव तेषामुपस्थिति वर्णिता। १६

५. सप्तमकाण्डे वेदवत्याः प्रसंगोऽवलोकनीयः। सीतापूर्वजन्मे वेदवती आसीत्। अस्य षट्काण्डेष्वेवं नावलोक्यते।

६. महाभारतान्तर्गतरामोपाख्याने सप्तमकाण्डे, वर्णितः। कथा नोपलभ्यते।

७. रामायणे बालकाण्डे वर्णनमस्ति यत्पूर्वमस्य काव्यस्याभिधान पौलस्त्यवधमासीत्। यथा हि—

---

१५. रा. ६-१२८-८८ ततस्ते वानरर्षभाः विसृष्टाः पार्थिवेन्द्रेण किष्किन्धां समुपागमन्।

१६. तत्रैव ७-१ सर्गः।

पौलस्त्यवधमित्येवं चकार चरितव्रतः । १-४-७

शिशुपालवधकाव्यवदेवास्याभिधानमासीत् १७ ।

युद्धकाण्डे पौलस्त्यवधं रामराज्यप्राप्तिश्च वर्णिते । काव्यशास्त्रीय-नियमानुसारेण नायकस्य फलप्राप्तौ काव्यसमाप्तिर्जायते । अत उत्तर-काण्डस्य प्रक्षेपत्वं निश्चितम् ।

## प्रक्षिप्तोत्तरकाण्डे रामस्य चरित्रहीनता

उत्तरकाण्डे रामस्य चरित्रहीनतानेकत्र प्रतिपादिता । एकस्मिन्स्थले रामसीतयोरुन्मत्तता विलासनृत्यञ्च वर्णितम् । रामः स्वयं मद्यमांसादि—सेवनं कृत्वा जगजननीसीतामपि मैरेयाख्यां सुरां पाययति ।

सीतामादाय हस्तेन मधुमैरेयकं शुचि ।
पाययामास काकुत्स्थः शचीमिव पुरन्दरः ।।
मांसानि च समृष्यानि फलानि विविधानि च ।
रामस्याभ्यवहारार्थं किंकरास्तर्णमाहरन् ।। ७-४२-१८२६

एकपत्नीव्रतीरामः सीतया सहान्यरमणीभिः रममाणो दिवसानि व्यत्यापयत् ।

अप्सरसोरगसंघाश्च किन्नरीपरिवारिताः ।
दक्षिणा रूपवत्यश्च स्त्रियः पानवशं गताः ।।
उपानृत्यन्त काकुत्स्थं नृत्यगीतविशारदाः ।
मनोभिरामा रामास्ता रामो रमयतां वरः । ७-४२-२०-२१

नैतादृशं वर्णनं रामचरित्रतुल्यम् । अतो सप्तमकाण्डस्य प्रक्षेपत्वं निश्चितम् । अन्यत्रापि सीतानिर्वासनशम्बूकवधादिप्रसंगेषु मर्यादा-पुरुषोत्तमरामस्य पौरुषहीनता वर्णिता ।

## इतरकाण्डेष्वपि प्रक्षिप्तांशपरिचयः

इदं सुनिश्चितं यद्भारतवर्षे बौधधर्मस्य प्रादुर्भावात् पूर्वमेव रामायणस्य रचना जाता । रामायणे बौधधर्म विषये न किमपि प्रतिपादितम् । अयोध्याकाण्डे बुद्धविषयके पद्ये बौधप्रभावः दृश्यते ।

---

१७. तत्रैव १-४-७ पद्ये अमृतकतकव्याख्या द्रष्टव्या ।

बेवरमहोदयस्य रामायणे बौद्धप्रभावविषयकं मतं निश्चितरूपेण भ्रान्तिपूर्णं वर्तते १८। रामायणे अयोध्याकाण्डे महामनाबुद्धविषयको श्लोकः।

यथा हि चौरः स तथा हि बुद्धस्तथागतं नास्तिकमत्र विद्धि। २-१०९-३४
निश्चितरूपेण वक्तुं शक्यते यत्प्रक्षिप्तोऽयं श्लोकः। विन्तरनित्समहोदयस्यापि मतमीदृशमेव १९।

रामायणे रामस्य विष्णुरूपं पश्चाद्वर्ती कथ्यते। अयोध्यायुद्धकाण्डयोः रामः साक्षाद्विष्णुः प्रतिपादितः। यथा—

अर्चितो मानुषे लोके नरो विष्णु सनातनः। २-१-७
प्रीयते सततं रामः स हि विष्णु सनातनः।
आदिदेवो महाबाहूर्हरिर्नारायणः प्रभुः। ६-१२८-११८-११६

युद्धकाण्डे यत्र सर्वे देवाः रामस्तुतिं कुर्वन्ति तत्र रामस्य विराट्रूपं वर्णितम् २०। ऐते प्रक्षिप्तांशाः।

किष्किन्धाकाण्डे २१ राजधर्मविषयको श्लोको मनुस्मृत्यामपि स्तः। २२

राजभिधृतदण्डास्तु कृत्वा पापानि मानवाः।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा।
शासनाद्वा विमोक्षाद्वास्तेनः स्तेयाद्विमुच्यते।
राजात्वशासत्पापस्य तद्वानानोति किल्विषम्॥ ४-१८-३३-३४

---

१८. ए. बेवर, History of Indian Lit. (भारतीय साहित्य) पृ. १८१

१९. एम. विन्तरनित्स, A History of Indian Lit. (भारतीय साहित्य) भा— १, खण्ड—२, पृ. १७८— १७९।

२०. रा. ६. १०५.८, ६-१०५-२१-२२।

२१. तत्रैव ४ १८-३३-३४।

२२. मनुस्मृत्यां, ८-३१६, ३१८।

पूर्वश्लोके मनुकृतकथनेन वाल्मीकेः मनोरुत्तरवर्तीकालस्य भ्रान्तिजनिता । वाल्मीकिस्तु मनोः प्राचीनतरः ।

श्रूयते मनुना गीतौ श्लोकौ चरित्रवत्सलौ ।
गृहीतौ धर्मकुशलैस्तस्तथा चरितं हरेः ॥ ४-१८-३२

कोऽपि मनुस्मृत्याभिमानी पूर्वोक्तश्लोकाभ्यां पूर्वं श्लोकमिमं प्रक्षिप्य भ्रान्तिमेनां कल्पितवानित्यत्र न संशयः ।

एवं रामायणे प्रक्षिप्तस्थलानां बाहुल्यं बर्तते तेषामाकलनं दुरूहकार्यम् । बालकाण्डस्य मौलिकता सुस्पष्टा । पाश्चात्यविदुषाँ रामायणविषयकं मतं न युक्तम् । रामायणस्य शैली महाभारतात् परिष्कृता परिमार्जिता वर्तते । रचनाकालः प्रक्षिप्तांशपरिचयश्च रामायणस्य पुनराकलनमपेक्षते । कतिपयैः प्रमाणैर्ज्ञायते यदुत्तरकाण्डं रामायणे संयोजितम् २३ । परं तदापि रामायणं संस्कृतकाव्यकल्पवल्ल्या मूलम्, मृदुमधुरभाषायाः जन्मभूमिः, नवरसानामावासः, काव्यगुणानां लक्षणं लक्ष्यं च धर्माधर्मविवेकबोधकः, आर्षवेदः, श्रावणालंकारः, आत्मानन्दः प्राचीनभारतस्येतिहासस्य चित्रपटः, शान्तरसप्रधान, सर्वत्रकरुणाजनकः । तस्याध्ययने न जन्मनः साफल्यम् । अत उच्यते ।

रामायणं विनाऽर्याणां शरणं न हि दृश्यते ।
तन्नाम श्रवणं वापि विनाऽनार्यो न विद्यते ॥

इति मे विश्वासः ।

---

२३. 'संस्कृत महाकाव्य की परम्परा' पृ. १६२ ।

१. डा० केशवरावः मुसलगावकरः,



# हिमानी

**प्रथमकणिका** | **प्रो० केशव शर्मा**

१

कोऽयं हिमाचल इति समुदेति प्रश्न:
तस्योत्तरं च प्रददौ स्वयमेव कृष्ण : ।
गीता सुगीतिषु परा शुभश्लोकयुक्ता
या, सा हि साधयति तस्य हिमालयत्वम् ।१।

हिमाचल या हिमालय के विषय में सभी के मनों में एक जिज्ञासा रहती है। उसी जिज्ञासा का उत्तर श्री गीताजी में प्रतिसंक्षेपसे भगवान् ने स्वयं यह कहकर दिया कि पर्वतों में मैं हिमालय हूं । ।१।

क्वासौ महान्नगपतिर्हि हिमाचलोऽयम्
कुत्रास्ति चास्य गणना किल केशवस्य ?
एषस्तु हैमकणतामपि नोपयाति
एवञ्च धूलिसमतापि कुतस्तवास्य ।२।

कहां तो इतना महान् हिमाचल जिसे भगवान् अपना स्वरूप मानते हैं, और कहाँ यह तुच्छ जीव केशव, यह तो इसकी एक हिमकणिका के समान भी नहीं, धूल की समानता तो यह कैसे कर सकता है ।२।

तत्रापि चिन्तयति एष जन: स्वकीयाम्
हैमाचलीयजलखाद्यपयोभिरस्य ।
वृद्धि तथा च बहुलानि सुमञ्जुलानि
अस्यैव क्रोड़कृतक्रीड़नकानि तानि ।३।

तोभी हिमाचल के अन्न-जल से इसका शरीर बना है, बढ़ा है, इसी की गोद में इसने अनेक बालक्रीड़ाएं की हैं। वे सब इस के स्मृति पटल पर आजभी विद्यमान हैं

बाल्येऽस्य धूलिषु सदा लुठितमनेन
शक्तिर्यदास्य गमने नहि विद्यते स्म।
पश्चात्ततोऽपि तव देहजभोजनेन
शक्तिमवाप्नुवमहं गमनस्य पूर्णाम् ।४।

जब इस शरीर में सरकने की, ऊपर उठने की शक्ति भी नहीं थी तो हे हिमाचल ! तेरी धूलि में यह लोटता रहा फिर तुझपर उत्पन्न पदार्थों से इसे खड़ा होने की चलने फिरने की पूर्ण शक्ति प्राप्त हुई। ४।

ग्रामे स्वमित्रसहितेन कदाचिदत्र
गोभिर्गतं हरितघाससुपूर्णक्षेत्रे।
घासस्य भारमपि स्वीयगवां कृतेऽत्र
आनीतवान्-सुहरितं रसपूरपूर्णम् ।५।

हरीभरी सुकोमल घास से भरे तेरे खेतों मे मैंने अपने बालमित्रों के साथ गाए चराई और तेरी पहाड़ियों से कटे हुए रसपूर्ण घासको मैं अपनी गायों को खिलाने के लिए लाता रहा।५।

क्षेत्रेषु शस्यपरिपूर्णतमेषु तेषु
शस्यस्य कर्तनमकारि कदाचिदेव।
तस्यादनेन परिवर्धितदेह एष:
कर्तव्यमात्रपरिपूरणकामुकोऽस्ति ।६।

अन्न से हरे भरे तेरे खेतों से मैंने अन्न इकठ्ठा किया। उसी स्वादभरे मीठे शक्ति दायक अन्नसे मेरा शरीर शक्ति सम्पन्न हुआ। अतः मानव होनेके नाते मैं केवल अपना कर्तव्य मात्र पूरा कर रहा हुँ ६।

तस्मान्नगोऽस्ति मम पूजनयोग्य एव
पूजासु नैव लघुतागुरुताविचारः।
तस्माद्विभिन्नगुणछन्दसुगन्धपूर्णम्
वाक्पुष्प पूजनमिदं तव पादयोर्मे ।७।

एक बात और है और वह यह कि हिमचल मेरे लिए पूजनीय है । पूजा में एक तादात्म्य सम्बन्ध बनता है और तब पूज्य पूजक में छोटे बड़े का कोई भेद नहीं रहता ऐसा ही मान कर मैं अत्यन्त क्षुद्र जीव होते हुए भी अनेक गुणों छन्दों की सुगंधसे सुगंधित अपनी तुच्छ वाक्पुष्पाञ्जली तेरे चरणोंमें समर्पित कर रहा हूं ।७।

धन्योऽस्ति भारतभुवस्तु किरीटरूपः
यं स्वीयरूपमिव स्वीकुरुते मुकुन्दः।
माता शिवाऽथ च शिवोऽपि गणैः स्वकीयैः
लीलाविलासमिरतौ वसतोऽस्य शृंगे ।८।

भारत माताके किरीटरूप ! आप धन्य है । भगवान् श्री कृष्ण भी आप को अपना रूप मानते हैं । माँ पार्वती तथा आदि देव शंकर अपने गणों सहित आपकी चोटियोंपर निरन्तर अपनी लीला करते हैं । ८ ।।

नायं नगोऽस्ति किल पर्वतशृंखलैव
सन्त्यत्र सुन्दरतमाश्च उपत्यका। वै ।
सम्पूर्णभारतभुवः खलु सभ्यतायाः
स्रोतस्त्वयं भवति नित्यमनादिकालात् ।९।

यह हिमाचल केवल एक पहाड़मात्र या पर्वत शृंखलामात्र नहीं है। इसकी घाटियां अत्यन्त सुन्दर और मोहक हैं । अनादिककाल से यह संसार की सभ्यता का स्रोत रहा है ।। ९ ।।

कश्मीरतस्तु ह्यसमोऽस्ति स्थितोऽति दूरे
क्रोशात्शतद्वयमिताच्छतवेदयावत् ।
विस्तारमस्य नगराजहिमालयस्य
एतावदस्ति बहुलः प्रसृतो धराथाम् ।१०।

कश्मीरसे असम दो सौसे चार सौ कोस तक की दूरी पर स्थित है ।
इस हिमालय काविस्तार भी प्रायः इतना ही है । १० ।

सार्ध-सहस्रद्वयमस्ति च लम्बताऽस्य
क्रोशेषु विस्तृततमा मसृणा कठोरा ।
या ब्रह्मपुत्रनदतः-किल पूर्वभागे
संयाति –इन्दुसरितं खलु पश्चिमायाम् ।११।

इस हिमालय की लम्बाई लगभग ढाई हजार किलोमीटर तक फैली हुई है
यह सीमा पूर्व में स्थित ब्रहमपुत्र नद से आरम्भ होकर पश्चिम की इन्दु नदी
तक कहीं कठोरता तो कहीं कोमलता के साथ फैली हुई है ।११।

सन्त्यद्य शैलशिखरेषु हिमालयस्य
कश्मीरजम्वथ हिमाचलसुप्रदेशाः ।
उ०प्र स्य पर्वतविभागमयश्च खण्डः
नेपाल दारजयलिंग स सिक्किमश्च ।१२।

हिमालय की पर्वत शृंखलाओं में हिमाचल प्रदेश, कश्मीर, जम्मू, उत्तर प्रदेश का पहाड़ी भाग नेपाल, दारजलिंग, और सिक्किम प्रदेश हैं ।१२।

नागालयोऽसमसमाः सुभगाः प्रदेशाः
एष्वेव नृत्यति सदा प्रकृतिर्नटीव ।
क्रीड़ापरा विविधभावमयी विचित्रा
स्वीयानि दर्शयति शोभनमङ्गकानि ।१३।

इसी प्रकार नागालय असम जैसे अन्य भी एक से एक सुन्दर प्रदेश यहां स्थित हैं। इन प्रदेशों में प्रकृतिने भरपूर सौंदर्य बिखेरा है। मानो वहां प्रकृति एक सुन्दरतम नायिका के रूप में अपने सौन्दर्य का पूर्ण प्रदर्शन कर रही हो।१३।

सोऽयं हिमाचल इति प्रथित: पृथिव्याम्
स्वातन्त्र्यप्राप्त्यनु दधार नवं स्वरूपम्।
विद्योततेऽद्य खलु दक्षिणदिग्वि भागे
दिव्यस्य रौप्यसुभगस्य हिमालयस्य ।१४।

स्वतन्त्रता प्राप्ति के बाद इन प्रदेशों में हिमाचल की स्थिति हिमालय के पश्चिम भाग में है। जहां हिमालय की चांदी के समान चमकने वाली चोटियां एक अनुपम दृश्य प्रस्तुत करती हैं।१४।

पौराणिकैर्विविधशास्त्र विचारदक्षै:
सम्वर्णितोऽस्ति नु जलन्धरपीठखण्ड:।
दिव्यौषधैर्विविधवृक्षलतासमूहै:
सम्पूरितोऽस्ति सकलोऽपि ,हिमालयस्य ।१५।

अनेक शास्त्रों तथा पुराणों में निष्णात विद्वानों ने इस भाग को हिमालय का जालन्धर पीठ खण्ड भी माना है। इस भाग में अनेक प्रकार के वृक्ष लताएं और दिव्यौषधियां भी विद्यमान हैं।१५।

यश्चात्र संस्मरति शुभ्रहिमालयीयम्
श्रृंगं स साम्यमधिगच्छति पूरुषस्य।
काश्यां प्रपूजयति यस्तु शिवस्य लिंगम्
स्कान्देऽस्ति वर्णनमिदं नु हिमाचलस्य ।१६।

स्कन्द पुराण में इस प्रकार वर्णन किया गया है कि जो व्यक्ति

हिमालय के इन श्वेत शृंगों का स्मरण भी करता है वह काशी जी में विराजमान श्री विश्वनाथ जी की पूजा करने वाले के बराबर ही पुण्य का भागी होता है।१६।

श्रीशंकरोऽत्र न्यवसन् युगान्तरेभ्यः
तद्वच्छिवापि कथिता किल शैलजा सा।
गंगापि पर्वततनोर्जनिमाप पूर्वम्
तस्मात्कथं न स भवेत्खलु पापहारी? ।१७।

श्रीशंकर भगवान् अनादिकाल से यहां निवास करते हैं। माता पार्वती भी तो हिमाचल की पुत्री हैं। अतः उनका निवास यहां निश्चित ही है। जगत्पावनी गंगा जी भी इसी से प्रकट हुई है। अतः हिमाचल स्वयं पावनतम क्यों न हो? ।१७।

यावद्भवन्ति चतुरस्रकृते पृथिव्याः
त्रिःसप्त ष-ड्थ च पञ्चशरस्तु क्रोशाः।
तावन्मितास्ति गणिताऽस्य तु पूर्णसीमा
ग्रामाः षड्केनवषट्प्रभुसंख्यकाश्च ।१८।

हिमाचल प्रदेश ५५६७३ स्क्वायर किलो मीटर क्षेत्र तक विस्तृत है। इसमें १६,९१६ ग्राम हैं।१८।

लोकास्तथात्र निवसंति सुखेन सर्वे
कोट्यर्धसंख्यकमितास्तु हिमाचलेऽस्मिन्।
कश्मीर जम्मुसहितोऽस्य तु उत्तरस्याम्
पूर्वास्ति शोभनतया सुसनाथिता च ।१९।

पचासलाख के लगभग अब यहां की जन संख्या हो रही है। इसकी उत्तर दिशा में जम्मू कश्मीर है और पूर्व दिशा में।१९।

दिव्येन शोभनतमेन त्रिविष्टपेन
किञ्चिद्धि दक्षिणतमेऽथ च पूर्वभागे ।
गढ़वाल-उत्तरप्रदेशस्थितिर्विचित्रा
उच्चावचा समतलापि च मिश्रितास्ति ।२०।

दिव्य तिब्बत स्थित है । दक्षिण पूर्व में गढवाल के ऊंचे पहाड़ और उत्तर-प्रदेश के मैदान स्थित हैं । २० ।

अस्यैव दक्षिण-सुपश्चिमभागयोर्वै
पञ्चाम्बुना सह स्थितोऽस्ति प्रदेश एकः ।
तस्यैव नाम हरियाण इति प्रदिष्टः
दुग्धादिभिर्दधिघृतैर्हि सुपूरितो यः ।२१।

हिमाचल के दक्षिण पश्चिम दिशाकी ओर पञ्जाब और हरियाणा ये दोनों प्रदेश स्थित हैं । हरियाणा दूध दही घी के लिए प्रख्यात है । २१ ।

कीदृग्विधास्ति रचनास्य हिमाचलस्य
भागेषु त्रिष्वपि च सा खलु दर्शनीया ।
तत्रैव धातुरपि सृष्टिविचित्रतायाः
साक्षाद्धि दर्शनसुखं लभते मनुष्यः ।२२।

हिमाचल का वर्णन इसके तीन भागों में किया जासकता है । विधाता की मधुर सृष्टि का पता भी तभी लगता है और मानव इसके वर्णन से युक्त शब्द चित्रका साक्षात्कार करके अमित आनन्द प्राप्त करता है । २२ ।

एतत्कृते नु प्रथमं स विभाजनीयः
खण्डेषु त्रिष्वपि च येन सुवर्णनं स्यात् ।

तस्माच्च वर्णनमयामृतदिव्यपानात्
धन्यो भवेद्भुवि सदा जनतासमूहः ।२३।

वर्णन की दृष्टि से हम इसे तीन भागों में विभक्त करते हैं । तभी इसका थोड़ा सा वर्णन हो सकेगा । इस वर्णनमय अमृत के पान से सारा जनसमूह धन्य होगा । २३ ।

आद्योऽस्ति निम्नतरक्षेत्रमयोऽस्य भागः
तत्रास्ति नूतनतमास्य महानगस्य ।
शैवालकाख्यलघुभूधरमालिकापि
या कांगड़ां च शिरमौरसमं युनक्ति ।२४।

इसका प्रथम भाग नीचे का है जहां सीधी भूमि और लघुतम पहाड़ियां हैं। इन पहाड़ियों को शिवालिक कहते हैं ये कांगडा से सिरमौर तक फैली हुई हैं । २४ ।

शैवालकास्य किल पर्वतशृंखला या
सा विस्तृताथ परिमण्डितबालुकापि ।
पाषाणखण्डबहुलापि सुशस्यपूर्णा
एका कदाचिदथवा द्विगुणापि दृष्टा ।२५।

इस महान् पर्वत की शिवालिक पहाडियां काफी विस्तृत हैं तथा रेतीली मिट्टी वाली हैं। इसमें पत्थर भी हैं पर यह भूमि उपजाऊ है और इन पहाडियों की शृंखला कहीं इकहरी तो कहीं दोहरी भी है । २५ ।

अस्याश्च शैलशिखराः स्वयमुच्चतायां
गंगातटाद्धि गणिताः- गणकैर्विशिष्टैः ।
बाणेन्दु —अंकमितमीतरतोऽधिकास्ते
नैवेति मापकजनैरनुमीयतेऽद्य ।२६।

गांगेयक्षेत्रों से इन पहाड़ियों की उंचाई ६१५ मीटरों से अधिक नहीं है । ऐसा मापक जनों का कहना है। जिन्हों ने इनकी उंचाई का अनुमान लगाया है।२६।

सेयं घनैर्विपिनजैस्तरुभिर्मनोज्ञा
रङ्गैरनेकविधपर्णलताप्रतानात्-
जातैः प्रतीयत इव प्रथिता पृथिव्याम्
काप्यद्भुता कृतिकरस्य हि चित्रवीथिः ।२७।

इन निम्न घाटियों में घने जंगल हैं। पेड़ हरे भरे अनेक रंग की लताओं से घिरे रहते हैं। मौसम के परिवर्तन के समय जब इन में विभिन्न रंगों के पत्ते और फूल आते हैं तो ये किसी महान् चित्रकार की चित्रशाला से भी सुन्दर दृश्य प्रस्तुत करते हैं ।२७।

अस्यां वसन्ति विलसन्ति सुगुल्मकेषु
सिंहाश्च व्याघ्रसहितैरपि चित्रकैश्च ।
भल्लूकयूथपतयः परितः सुगुप्ताः
अन्येऽप्यनेकविधवन्यमृगाश्चरन्ति ।२८।

इस विशाल पर्वतश्रृंखला के नीचे इस के वृक्षलताओं के बीच में शेर बाघ चीता, भालू, तथा दूसरे अनेक वन्य प्राणी छिपे रहते हैं ।२८।

भागस्तु निम्नतम एष हिमाचलस्य
संशोभितोऽस्ति बहुभिर्हि—उपत्यकाभिः ।
आस्वेव ग्रामनिचयाः...बहवो बसन्ति
युक्तास्तु नीरनदिभिर्लघुपर्वतैश्च ।२९।

यह सारा क्षेत्र छोटी छोटी उपत्यकाओं से आवृत है। इन घाटियों से ऊपर कम उंचाई वाले पहाड़ हैं तथा नीचे सीधे स्थानों में ग्राम बसे हैं,इधर उधर नदी नाले बहते हैं ।२९।

अत्रास्ति नूतनतमा गिरिमालिकेयम्
अन्नैर्जलैस्तु परितः परिवेष्टितापि ।
क्षेत्रैरनेकविधभूमियुतैः सदैव
नात्युच्चपर्वतगणैस्तु मनोभिरामा ।३०।

हिमाचलका यहां से आरंभ होता है । और ये छोटी उपत्यकाएं अन्न जल से भरपूर हैं। अनेक प्रकारकी मिट्टी वाली छोटे २ पर्वतों वाली मनोहर दृश्या वली को जन्म देती हैं । ३० ।

भागोन्वयं निगदितः प्रथमः पृथिव्याम्
सौम्योऽपि शोभनतमोऽपि हिमाचलस्य ।
तस्मात्परोऽपि खलु स्वर्ण सुगन्धयुक्तः
भागोऽपरोऽस्ति सुगमोऽपि च दर्शनीयः ।३१।

हिमाचलका यह पहला भाग इस भूमण्डल पर सुन्दरता की अद्भुत छवि बिखेरता है ।

परन्तु इससे आगे हिमाचलका दूसरा भाग प्रारम्भ होता है । यह इससे भी अद्भुत और सुन्दर हैं । यहाँ सोनेमें सुगंध वाली उक्ति पूरी तरह चरितार्थ होती है । ३१ ।

अस्मिन्-हिमाचलप्रदेशद्वितीयभागे
गिर्युच्चता ख-ख-शराब्धिमितास्ति प्रोक्ता ।
उच्चास्तु पर्वतशिखाः-लघवोऽत्र क्षेत्राः
स्वल्पाः- जनास्त्वधिवसन्ति गृहाश्रमेषु ।३२।

हिमाचल प्रदेश के इस दूसरे भाग में पहाड़ों की ऊंचाई ४५०० मीटर तक है । पहाड़ों की चोटियां काफी ऊंची हैं । छोटी तंग घाटियों के दर्शन होते हैं यहां ! थोड़े थोड़े घरों वाले ग्राम हैं और बस्ती बहुत बिरली है । ३२ ।

भव्यं हि दर्शनमितस्तु हिमाचलस्य
यत्र त्रिरूपमुपयान्ति सुभूधरास्ते ।

निम्नास्तदुच्चतर—उच्चतमाः क्रमेण
तद्वद्विभिन्न स्थितिवर्णयुताः—विभान्ति ।३३।

वहां से हिमाचल के दिव्य दर्शन प्रारंभ होते हैं । तीन प्रकारके पहाड़ कुछ ऊंचे, फिर और ऊंचे और आगे और भी अधिक ऊंचे । इस प्रकार तीन प्रकार की पर्वत शृंखलाओं का दर्शन होता है । जिनका अपना रूप तो अपना होता ही है और वह भी भिन्न रंगों वाला ।३३।

वृक्षाः भवन्ति ख-खवाणत्रिमीतरान्तम्
गांगेयक्षेत्र समतोच्चतमेऽस्य भागे ।
तस्मात्परेऽभ्रलिहपर्वतखण्डमध्ये
साम्राज्यमस्ति परितो हि सदा हिमान्याः।३४।

गांगेय क्षेत्र से केवल ३५०० मीटर की ऊंचाई तक तो घने वृक्ष उत्पन्न होते हैं । उससे आगे जो पर्वत श्रेणी है वह अधिक ऊंची होती जाती है और वहां केवल हिमका ही साम्राज्य है ।३४।

शुभ्राः पतन्ति हिमखण्डविशालभागाः
अस्या सदा निकटवर्ति समेऽपि क्षेत्रे ।
आपूरयन्ति सततं गिरिगह्वराणि
रुद्धाः भवन्ति च तदा किल राजमार्गाः ।३५।

यहां बर्फ के तोंदे गिरते रहते हैं वे निकट वर्ती सीधे क्षेत्रों तक सरकते हैं नदियों में पड़ते हैं और नए निकले हुए राजमार्गों सड़कों को भी रोकदेते हैं जिससे बस आदि यानों के आवागमन में भी बाधा पड़ती है ।३५।

प्राच्यां हि सन्ति सुघनानि वनानि तत्र
आच्छादयन्ति खलु निम्नगभागमस्य ।

एतेऽस्य सन्ति सुभगास्तु भुवो विभागाः
कुल्लू–बशाहर–समेतसुजुब्बलाख्याः ।३६।

हिमाचल के पश्चिम भाग में घने और लम्बे २ जंगल हैं (यद्यपि अब ये एक चौथाई भाग मात्र शेष हैं) इन से ऊंचे पहाड़ों का निचला हिस्सा ढका रहता है । इन स्थानों में मुख्य हैं कुल्लु, रामपुर बुशहर, जुब्बल आदि । ३६ ।

एष्वेव देवतरवः खलु विश्वख्याताः
नत्यन्ति दूषणमितोऽपनयन्ति दूरम् ।
अस्यापि बाह्यतमपर्वतशृंखलासु
नीचैर्भवन्ति शुभपर्यटनस्थलानि ।३७।

इन भागों में देवदार के विशालवृक्ष सदा झूलते रहते हैं और इस भाग में फैलने वाले प्रदूषण को दूर करते हैं । इन्हीं ऊंचे पहाड़ों पर नीचे की ओर स्थित हैं छोटी २ पहाड़ियां जहां सुन्दर पर्यटन स्थल विद्यमान हैं । ३७ ।

मनालयोऽथ शिमलाऽथ च सोलनं वै
डलहौजि नाहन समानि बहूनि तत्र ।
अत्रैव भारतभुवो बहुलाः–मनुष्याः
आगत्य शान्तिपरितोषसुधां पिबन्ति ।३८।

इन अनेक स्थानों में मुख्य हैं मनाली, शिमला आदि विदेशोंसे भी असंख्य पर्यटक यहां आते हैं सुख और शान्ति की सांस लेते हैं और आनन्द प्राप्त करते हैं । ३८ ।

अस्यैव मध्यमतमस्य हिमाचलस्य
शाखाद्वयं समवलोकितमस्ति सर्वैः ।
आद्यास्ति ख्याततमपीरपञ्जाल नामा
रम्या,सिता,धवलधारमयो द्वितीया ।३९।

दिदृक्षते सकलमानवजो य यस्य
खण्डोऽस्ति सोऽपि प्रथितो महतो महीयान् ।
नास्त्यस्य कोऽपि शिखर: खलु उच्चतायाम्
न्यूनस्तमो मितरसार्धसहस्रपञ्चात् ।४०।

अखिल मानव समाज के मन में हिमाचल के अग्रिमतम रूप को देखने की इच्छा सदा बनी रहती है । इन अग्रिम पर्वत शिखरों की ऊंचाई साढे पांच हजार मीटर से कम नहीं हैं । ४० ।

अक्षोऽयमस्य कथितोऽस्ति तदा तु तज्ज्ञैः
सर्वस्य भूमिवलयस्य सदैव मान्या:! ।
ग्राणिन्मयैरपि च तत्किटज्ञालश्रृंगै:
कामण्यवर्ण्यसुषमां सुतरां विधत्ते ।४१।

इसी भाग की पृथ्वीका अक्ष भी माना गया है ग्रेनाइट और उसके मेलसे बने सुन्दर पाषाणों वाले यहांके पर्वत शिखर एक अवर्णनीय शोभा धारण करते हैं । ४१ ।

अस्मिन् हिमाचलप्रदेशयुते हिमाद्रौ
उच्चाश्च ये कतिपया: शिखरा: सुरम्या: ।
तेषां हि नामकथनं प्रकरोमि नूनम्
लोका: वदन्ति च यथा हिमवत्किरीटान् ।४२।

हिमालयके जितने क्षेत्रमें हिमाचल फैला है इस क्षेत्र की जो रम्य और ऊंची चोटियां हैं और आज लोग जिन नामों से उन्हें सम्बोधित करते हैं उनमें से कुछ के नाम मैं यहां प्रस्तुत कर रहा हूं । ४२ ।

शिल्ला, लेयौ, पार्गिल, शिप्कि, मानेरङ्ग्
मुर्खिल, ड्बी, बोकरि कुलूत च किन्नराख्या: ।

कैलाशश्रृंग, ग्यये पांग, देम्रो टिबा च
सोलंग, मैवा, कुण्डिनू, अथ पीर्पञ्जाल:।४३।

पारंगला उमशिला श्रीखण्ड लाच्लू
ग्ला म्रुंगला शिरिंगला च वरालया च ।
पिन् पार्वतीति प्रमुखाः शुभशैलश्रृंगाः
शोभायुताः सततमुच्चतराः विभान्ति ।४४।

यद्यपि हिमालयके सबसे ऊंचे शिखरों में से हिमाचलमें विशेषतः कोई शिखर नहीं तो भी यहाँ काफी ऊंचे शिखर हैं जिनके नाम एवं ऊंचाई इस प्रकार हैं स्पीति में शिल्ला ७०२५ मीटर लेम्रो पार्गिल ६७९१, शिप्की ६६००, मानेरंग् ६५९७, लाहौलस्पीति में मुखिला ६४००. डिबीबोकरी (कुल्लु)६४०० किन्नर कैलाश ६५०० गेपांग् ६४०० देम्रोटिब्बा ६००१. सोलांग (कुल्लु ५९७५ मेवाकुण्डिन् (कुल्लू) ५६४४, पीरपंजाल ५७९२, पराँगला ५५७६ उमाशिला ५२९४, श्रीखण्ड (कुल्लु )५१८२ लाच्लुंग्ला ५०६० मुरंग्ला (लाहौलस्पीति ) ५०६०, शीरिंग्ला ४९९९ वराल्चा षास ४९९९ पिन् पार्वती ४८०० मीटरों की ऊंचाइयों पर स्थित हैं । ये चोटियाँ मांगलिक और अत्यन्त सुन्दर एवं ऊंची हैं जो इस प्रदेश के किरीटके समान हैं । ४३-४४।

हे शैलराट्! लघुतमेन हि वर्णनेन
किञ्चित् त्वदीयविषयेऽजनि ज्ञानमत्र ।
एतेन भूमिवलयस्य स्थितिर्हि ज्ञाता
येनात्र स्यात्तव च सा नगराजराजन्! ।४५।

हे पर्वतराज हिमाचल ? इस वर्णनके ब्याज से जो कणमात्र आपसे विश्वमें सम्बन्धित जानकारी है और भारत में तथा विश्वमें जो आपका स्थान है उसकी स्थिति को लोग अवश्य जान जायेंगे । ४५ ।

इत्याचार्यश्रीकेशवशर्मविरचिते हिमानी काव्ये प्रथमा कणिका ।

पूर्वांकादनुवृत्तम्

# दर्शन अर्णव रत्न शतकम्

केशवराम शर्मा
दर्शनाचार्य, एम॰ए॰ एम.फिल
(लब्ध स्वर्णपदकद्वय:)

तत्वानि दर्शनगणप्रतिपित्सितानि
मुख्यानि जीव परमात्म जगन्ति सन्ति ।
येषां यथार्थमुपलभ्य जनः कृतार्थः
ज्ञानं शमं परममेति निरन्तरायम् ।।११।।

बद्धो जनः श्वसिति निष्फलमेव दूनः
मुक्तो ऽश्नुते सफलतां मनुजीवनस्य ।
तद्बन्धनक्षपण मुक्त्युपलम्भहेतो
प्राज्ञैरुपायसरणिः प्रथमं विमृग्या । १२।।

अज्ञानमस्ति खलु बन्धनहेतुरस्य
ज्ञानं तथा भवति मोक्षनिदानमाद्यम् ।
तज्ज्ञान दीपकसहायजनः तमस्त-
दज्ञानजं कुशलधी द्रुतमुच्छिनत्ति ।। १३ ।।

अज्ञानिनो भवति कर्म हि बन्धहेतुः
निर्दग्धबीजवदहेतु च विज्ञकर्म ।
तस्माद् जनो निजजनुर्व्यवहारमूले
ज्ञानं विनिर्मलमपेक्षत एव नित्यम् ।। १४ ।।

निष्कामकर्मसमुपासनसत्क्रियाभ्याम्
शुद्धे मनस्यमल दर्पण सन्निकाशे ।
ज्ञानं विशुद्धमनघं प्रतिविम्बितं सत्
संमोचयत्यखिलबन्धनतो मनुष्यम् ।।१५।।

नित्यात्मनः चिरमनित्यजगत्पदार्थ-
सम्पर्क एव बहुदुःखकरो हि बन्धः ।
प्राप्ते विशुद्धपरमात्मनि तद्विमोक्षः
बिन्दोर्यथा भवति सिन्धुमुपागतस्य । १६॥

ब्रह्माण्डमण्डलमिदं प्रविभाति यद्यत्
तत्तत् समस्तमपि जीवनिकायपिण्डम् ।
सिद्धान्तितं निखिलदर्शनकृद्भिरेतत्
ब्रह्माण्डपिण्डगतमैक्यमपूर्वमादौ ॥१७॥

विश्वप्रविष्टपरमात्मचिदेकतत्त्वम्
आधेमदोषलवहीनमथ स्वतन्त्रम् ।
पिण्डाश्रयः तदविशेषगुणोऽपि चात्मा
नास्ते तथेति तिमिरं विनिवारणीयम् ॥१८॥

अन्तर्बहिः करणपुष्टियुतः प्रमाताऽऽ-
त्मानात्मरूपितपदार्थगणः प्रमेयम् ।
प्राप्तिर्मितिः तदुपलब्धिकरं प्रमाणम्
ज्ञानं ह्यपेक्षत इदं नियमात् चतुष्ट्वम् ॥१९॥

सर्वत्र वर्तिनि हि कारणकार्यभावे
कर्तुः शुभाशुभकृतेः नियमे फलस्य ।
सद्यः त्रिणाकनिरयाभ्युपपत्तिरत्र
सम्पद्यते हि परलोकपदार्थसिद्धौ ॥२०॥

———

राजकीय महाविद्यालय
सोलन, (हि० प्र०)

# राजवैद्य

## पण्डित रत्न स्व० नारायणदत्त जी षट् शास्त्री



### जन्म और शिक्षा

शिमला नगर से २० किलोमीटर के अन्तर पर शिमला मण्डी रोड पर १६ किलोमीटर से आगे ४ किलोमीटर के अन्तर पर हलोग नामक स्थान है, यह धामी स्टेट की राजधानी कहलाती है। ठीक यहां से पूर्व दिशा की ओर ४ किलोमीटर के अन्तर पर धारठ नामक ग्राम है। इसी लघु ग्राम में आज से १२० वर्ष पूर्व विक्रम सम्वत् १९२७ तदनुसार सन् १८७१ में सुविख्यात सारस्वत ब्राह्मण कुल में तत्कालीन धामी स्टेट के मन्त्री राजवैद्य श्री पं. हरिदत्त जी के घर श्री नारायणदत्त जी का जन्म हुआ था। श्री नारायण चार पुत्रों में कनिष्ठ पुत्र थे और बाल्य काल से ही विलक्षण स्वभाव और प्रतिभाशाली थे। पर्वतीय राज्यों में उस समय स्कूल आदि शिक्षण संस्थाओं की व्यवस्था नहीं थी यदि कहीं थीं भी तो न होने के बराबर थी। कुछ एक बड़ी स्टेटों में अनुकूल व्यवस्था भी थी, किन्तु यातायात साधनों के अभाव से उन शिक्षणालयों में निकट रहने वाले लोग ही अधिक लाभ उठा सकते थे।

उस समय विद्वान् ब्राह्मणों के घर में ही आस पास के बालक परम्परागत रूप से सामान्य अक्षर ज्ञान प्राप्त करते थे तथा ब्राह्मण बालक कर्मकाण्ड ज्योतिष आदि निःशुल्क अध्ययन करते थे।

श्री नारायण जी के पिता धामी स्टेट के मन्त्री होने के नाते अत्यन्त व्यस्त रहते थे अतः केवल अक्षर बोध करा कर उनको इन्होंने बाघल स्टेट की राजधानी अर्की के निकट बातल नामक ग्राम के

तत्कालीन सुविख्यात संस्कृत विद्वान् पं० श्री हरिनन्द जी के पास विद्याध्ययन के लिये भेज दिया कुछ वर्षों तक उनके पास व्याकरण के ग्रन्थ लघुसिद्धान्त कौमुदी का अध्ययन किया किन्तु इन्हें सन्तोष नहीं हुआ। दैव योग से इनके कुल पुरोहित प० नारायणदत्त वातल निवासी भी इनके साथ अध्ययन करते थे। दोनों ही एक नाम के थे। अध्ययन की अनुकूल व्यवस्था न होने के कारण आपस में परामर्श कर दोनों पटियाला के सुविख्यात विद्वान् के पास अध्ययन करने चले गये।

वहां भी पूर्ण सफलता न मिली श्री नारायण ने कुल पुरोहित, सहपाठी नारायण के आगे, भाग कर काशी जाने का प्रस्ताव रखा, किन्तु वह भय के कारण काशी जाने को उद्यत न हुए - और पटियाला से वापिस घर लौट आये श्री नारायण काशी चले गये और वहाँ तत्कालीन भारत विख्यात विद्वान् माहमहोपाध्याय श्री शिव कुमार शास्त्री के शिष्य बन गये। उन से लगातार ५- ६ वर्ष तक व्याकरण, निरुक्त छन्द, शिक्षा, कल्प, ज्योतिष आदि षड शास्त्रों का अध्य न पूर्ण किया। इनकी प्रतिभा और विद्वत्ता पर प्रसन्न होकर महामहोपाध्याय जी ने इन्हें षट्शास्त्री की उपाधि प्रदान कर वापिस घर भेज दिया। घर आकर गृहस्थाश्रम में प्रवेश लिया और धारठ ग्राम में रहने लगे किन्तु वहां १ – २ कमरे थे। अत: स्थान संकुचित होने के कारण निकट में ही बिघड़ी ग्राम (वर्तमान-नारायण निवास) में रहने का निश्चय कर लिया और वहां भवन निर्माण की व्यवस्था की एवं नवीन, ग्राम में रहने लगे धामी क्षेत्र में जनता में बड़ा हर्ष हुआ कि हमारे राज्य के एक ब्राह्मण काशी से शास्त्राध्ययन करके आये है। अनेकों लोग दर्शनों के लिये व जन्मपत्र आदि लेकर आने लगे। श्री नारायण जी की विद्वत्ता का प्रकाश धामी तक ही सीमित न रह कर सर्वत्र पर्वतीय क्षेत्र में फैलने लगा।

## शास्त्रार्थ में विजय

श्री नारायण जब शिक्षा समाप्त कर वापिस धामी आये तो उस समय धामी में राणा फतेह सिंह शासन करते थे। प्राचीन समय से हमारे देश में विद्वानों में शास्त्रार्थ कराने की परम्परा रही है; विशेष कर नरेश गण सभा आयोजित कर शास्त्रार्थ कराया करते थे तथा

शास्त्रार्थ में विजयी विद्वान् को सम्मानित करते थे। इसी से ही शास्त्र विशेष में निष्णात होने की परम्परा आजतक विद्यमान है।

उस समय कुमाऊं के कोई विद्वान् धामी स्टेट में रहते थे। कुछ ही महीनों के बाद चन्द्र ग्रहण लगने वाला था। राणा महोदय ने श्री नारायण को आदर पूर्वक बुला कर दोनों विद्वानों के शास्त्रार्थ का विषय चन्द्रग्रहण लगने का ठीक समय निकालना निश्चित किया। दोनों विद्वानों के आगे यह विषय निर्णय के लिये रखा गया और यह कह दिया गया कि चन्द्रग्रहण लगने पर जिसका समय निर्धारण ठीक निकलेगा उसे विजयी समझा जायेगा दोनों बिद्वानों ने गणित करके समय निकाल दिया। कुछ महीनों बाद श्री नारायण के गणित से निकले समय पर ग्रहण लगा और विजयी हुए। राणा फतेह सिंह ने प्रसन्न होकर इन्हें पण्डित रत्न की उपाधि से अलङ्कृत किया और उसी समय से राज पण्डित का पद प्रदान कर दिया।

## आयुर्वेद का अध्ययन

यद्यपि श्री नारायण ने आयुर्वेद को छोड़ कर विविध शास्त्रों में प्रखर बिद्वत्ता प्राप्त कर ली थी तो भी मन में यह बात निरन्तर खटकती थी कि हमारे कुल में परम्परागत रूप से आयुर्वेद की विशेषज्ञता का विषय भी प्रचलित है, अतः यदि मैं आयुर्विज्ञान से अनभिज्ञ रह गया तो यह एक भारी कमी समझी जायेगी दूसरे पाण्डित्य के साथ लोक कल्याण कारी बिशेष अर्थकरी विद्या का होना भी जीवन में आवश्यक है अतः वे आयुर्वेद का अध्ययन करने के लिये उस समय के बिख्यात आयुर्वेद के विद्वान् के पास अध्ययनार्थ संगरूर (पंजाब) चले गये। वहां कुछ वर्षों तक अध्ययन करने के पश्चात् वापिस आये और घर में एक लघु औषधालय की स्थापना की, जो आयुर्वेद रत्न औषधालय के नाम से ख्यात हुआ।

आयुर्वेद के अतिरिक्त इन्होंने जम्मू में यूनानी चिकित्सा का भी अध्ययन किया था।

## आयुर्विज्ञान से जनसेवा

आयुर्वेद चिकित्सा की यशस्विता न केवल पर्वतीय क्षेत्र तक ही सीमित रही बल्कि भारत भर में प्रख्याति बढ़ने लगी धामी के

राज परिवार में तो इतने घुल मिल गये कि तत्कालीन राणा हीरासिंह जो संस्कृत के भी विद्वान् थे, श्री नारायण के परामर्श के बिना राजकीय या पारिवारिक कार्य हो कोई भी स्वयं नहीं करते थे। संयोग वश उन्हीं दिनों राणा हीरासिंह की बहन का सम्बन्ध-पुंछ के राजा सर बलदेव सिंह से हुआ। उनकी अन्य रानियों के सन्तान न थी। इस प्रसंग से इनका पुंछ जम्मू, कश्मीर व लाहौर आदि में बराबर आना जाना होता रहा। धामी की राजकुमारी से ४ राजकुमार व १ राज कुमारी ने जन्म लिया। सुखदेव सिंह, जगत देव, पद्मदेव सिंह, चतुरदेव सिंह. ये ४ राजकुमार थे।

पुंछ आदि में निरन्तर आवागमन से सम्पर्क सूत्र सुदृढ़ होते गये और वहां भी रोगियों की चिकित्सा से विशेष ख्याति प्राप्त कर ली।

कुछ समय तक जम्मू कश्मीर नरेश महाराजा सर प्रताप सिंह के भी चिकित्सक रहे। सन् १६१४ में दिल्ली के दरबार में जब किंग जार्ज आया था तो श्री नारायण पुंछ नरेश के साथ दरबार में सम्मिलित हुए थे। इसी प्रकार कर्मकाण्ड, ज्योतिष, व आयुर्विज्ञान के द्वारा नरेशों से लेकर सामान्य जन समाज तक सेवा का कार्य करते रहे।

## हि. प्रदेश में गणतन्त्र के प्रवर्तक

दुर्भाग्यवश धामी नरेश राणा हीरा सिंह का स्वल्प आयु में ही स्वर्गवास हो गया और उनके सुपुत्र राजा दिलीप सिंह अभी १८ वर्ष की आयु से कम थे जो नियमानुसार राज सिंहासन पर बैठने के अधिकारी न थे। राज परिवार और प्रजा के सामने महान् संकट का समय उपस्थित हुआ। शासन चलाने के सम्बन्ध में परस्पर परिचर्चा होने लगी, पर्याप्त विषयमन्थन के पश्चात् राज परिवार और प्रजा ने सर्वसम्मति से यह निश्चय किया कि जब तक राजकुमार राज सिंहासन क अधिकारी नहीं होंगे तब तक शासन व्यवस्था संचालन के लिये राज्य में राज्यपरिषद (कौंसल) स्थापित की जाये तथा कौंसल के अध्यक्ष श्री नारायणदत्त जी को बनाया जाय। यह निश्चय कर श्री पं० जी से अध्यक्ष बनने के लिये प्रार्थना की गई। उन्होंने किसी भी रूप में यह दायित्व पूर्ण पद संभालने के लिये अनिच्छा प्रकट की

किन्तु प्रजा ने इनके अतिरिक्त इस पद के योग्य राज्य में किसी को भी पात्र न समझा और बार बार इन से अनुरोध किया जाने लगा। अत्यन्त विवश होकर ३-४ उपबन्ध (शर्तें) राजपरिवार और प्रजा के सामने रखे और कहा कि ये यदि राजा प्रजा को स्वीकार हो तो मैं परिषद् के अध्यक्ष पद को ग्रहण कर सकूंगा। जो इस प्रकार है :—

१. राज्य में मद्य का प्रयोग बन्द कर दिया जायेगा।
२. दशहरा पर महिश बलि प्रदान बन्द कर दिया जायेगा।
३. न्यायालय में मैं कुर्सी पर न बैठूंगा, सब सदस्यों के साथ भूमि में ही बैठूंगा।
४. सारा सरकारी काम काज हिन्दी में ही होगा।

उक्त चारों शर्तें प्रजा ने मान लीं और श्रीमती राजमाता साहेबा और प्रजा के प्रतिनिधि अपनी माँग लेकर तत्कालीन व्यवस्थापक पोलिटिकल एजेण्ट के पास चले गये। पोलिटिकल एजेण्ट ने इस सर्व-सम्मत अनुकूल निर्णय का स्वागत करते हुए राज्य में शासन चलाने के लिये सर्वसम्मत राजपरिषद के निर्माण की अनुमति प्रदान कर दी तथा श्री नारायण को अध्यक्ष मनोनीत कर दिया गया। अध्यक्ष महोदय ने प्रजा के कुछ गण्य मान्य पुरुषों को परिषद के सदस्य मनोनीत कर पोलिटिकल एजेण्ट से स्वीकृति प्राप्त कर शासन सूत्र संचालन प्रारम्भ-कर दिया।

इस प्रकार धामी स्टेट में गणतन्त्र शासन की स्थापना हो गई

## ७ वर्ष तक स्वच्छ प्रशासन
## व
## ईश्वरीय न्याय को प्रमुखता

इस प्रकार श्री नारायण लगातार ७ वर्ष तक परिषद के अध्यक्ष बने रहे। आप धर्मशास्त्रानुसार अभियोगों पर निर्णय लेते थे तथा कुछ सन्दिग्ध विषयों को ईश्वरीय न्याय पर छोड़ देते थे। इन के कार्यकाल में राज्य में २ हत्याएं भी हुई और काफी पूछ ताछ के बाद जिन व्यक्तियों पर अपराध सिद्ध हुआ उन्हें फांसी न दे कर मुक्त कर दिया तथा यह निर्णय लिया गया कि यदि ये भगवान् के न्याया-

नुसार अपराधी सिद्ध होंगे तो थोड़े ही समय के बाद स्वयं अपराध का दण्ड भोग लेंगे। परिणाम स्वरूप इस महत्वपूर्ण उलेखनीय निर्णय का सर्वत्र स्वागत हुआ और ईश्वरेच्छा से वे दोनों हत्यारे कुछ ही समय के बाद स्वयं दिवंगत हो गये। ७ वर्ष के शासनकाल में मद्यपान पूर्ण बन्द रहा। दशहरा महिष बलिदान सदा के लिये बन्द हो गया तथा सारा सरकारी काम काज हिन्दी में होता रहा।

कुछ एक अत्यन्त वृद्ध जो उस समय युवा थे, अभी तक नारायणदत्त जी के शासनकाल की रामराज्य से तुलना करते सुने जाते हैं। अन्त में राजा दिलीप सिंह जब सिंहासन के अधिकारी हुए तो उन्हें एक भारी समारोह में राज तिलक कर दिया गया और स्वयं ६ मन मोदक लड्डू) बांट कर पद से मुक्ति ग्रहण की।

## राय साहब उपाधि का त्याग

राजा दिलीप सिंह के राज तिलक के अवसर पर पोलिटिकल एजेण्ट ने भारत सरकार की ओर से जब नरेश महोदय को पूर्ण अधिकार समर्पण की घोषणा की तो उसके साथ ही श्री नारायणदत्त जी को भी आदर्श व स्वच्छ प्रशासन चलाने की सेवा के सम्मान में मान पत्र प्रदान करते हुए सरकार की ओर से राय साहब की उपाधि प्रदान करने की इच्छा व्यक्त की, किन्तु उन्होंने धन्यवाद पूर्वक यह सम्मान अस्वीकार करते हुए विचार व्यक्त किये "मेरा क्षेत्र जन सेवा है और धार्मिक साहित्यिक क्षेत्र है" मैं अपने को इस सम्मान के योग्य नहीं समझता हूं।" सरकार मुझे विद्वता की दृष्टि से कोई सम्मान देना उपयुक्त समझेगी तो उसे स्वीकार करने में मुझे कोई आपत्ति न होगी।

पोलिटिकल एजेण्ट ने काफी विचार विनिमय के बाद उनको कहा कि यदि आपका कोई पुत्र आई सी. एस. आदि प्रशासनिक सेवाओं में जाना चाहेगा तो उसे सीधा मनोनीत कर दिया जायेगा। प्रतियोगिता परीक्षा में भाग लेने की आवश्यकता न पड़ेगी किन्तु दुर्भाग्यवश इस सुविधा का लाभ नहीं उठाया जा सका।

## आयुर्विज्ञान में महत्वपूर्ण उपलब्धियां

### यक्ष्मारोग

उस समय यक्ष्मा (तपेदिक, पर पाश्चात्य चिकित्सा के क्षेत्र में

अनुसन्धान में विशेष सफलताएं उपलब्ध नहीं थी। अतः अनेकों रोगी, चिकित्सा के बिना काल ग्रस्त हो जाते थे क्योंकि आयुर्वेद में इसे राज यक्ष्मा इसलिये कह दिया कि यह बहुत धन व्यय से बहुमूल्य औषधियों द्वारा साध्यथी। निर्धनों के लिये रोग मुक्ति का कोई साधन न था।

श्री नारायणदत्त जी ने इस रोग के निवारण के लिये अनेको अनुसन्धान किये जो कुछ बहुधन साध्य थे और कुछ स्वल्प व्यय से ही सफलता देने वाले थे।

उस समय शिमला जिला में एक थरौच नामक लघु स्टेट थी। वहां के राज परिवार में यक्ष्मा का प्रकोप हुआ था। उन्होंने आयुर्वैदिक उपचार से रोगी को सर्वथा रोग मुक्त कर दिया था, लाहौर के व पर्वतीय क्षेत्र के अनेकों यक्ष्मा के रोगियों को लाभ पहुंचाया।

## नाड़ीव्रण (कैंसर)

आज के युग में पाश्चात्य आयुर्विज्ञान ने अनेकों रोगों पर पूरा नियन्त्रण पाने में पर्याप्त सफलता प्राप्त की है। इस में तनिक भी सन्देह नहीं किन्तु कैंसर रोग से मुक्ति पाने के अनुसन्धान में अभी तक भी पूर्ण सफलता उपलब्ध नहीं हो रही है। श्री नारायणदत्त जी के समय में तो इसका कोई उपचार सुलभ नहीं था किन्तु उन्होंने इसमें भी सफलता प्राप्त की थी।

कुठाड़ स्टेट के नरेश की पुत्री तथा महाराजा देव शमशेर जंग (नेपाल) की विधवा महारानी श्री मती शारदा कुमारी को कैंसर हो गया था। रोग के सम्बन्ध में तत्कालीन डाक्टरों से परामर्श किया गया डाक्टरों के विचार में शल्य चिकित्सा (आप्रेशन के अतिरिक्त इस रोग से बचाव का कोई उपाय न था। महारानी साहेबा आप्रेशन नहीं करवाना चाहत थी। परामर्श के पश्चात् श्री नारायणदत्त जी को धामी से कुठाड़ बुलाया गया। उन्होंने चिकित्सा प्रारम्भ की और २१ दिन तक लगातार चलती रही। श्रीमती शारदा कैंसर रोग से मुक्त हो गई बाद में काफी वृद्धावस्था में शरीर त्यागा। सभी डाक्टरों व जन समाज में आश्चर्यजनक चिकित्सा को एक महत्वपूर्ण घटना समझा गया। श्रीमती शारदा ने श्री नारायणदत्त को पर्याप्त धन राशि

से सम्मानित कर विदाई की इच्छा व्यक्त की किन्तु उन्होंने अस्वीकार कर दिया। जब बहुत विवश किया गया तो उन्होंने कहा कि यदि आपको स्वीकार हो तो मेरे ग्राम में जल की काफी कठिनाई है वहां पानी की व्यवस्था हो सके तो मेरा परिवार आपको सदा स्मरण करता रहेगा। महारानी ने इसे स्वीकार कर श्री नारायणदत्त जी के ग्राम में नल लगा कर एक उदाहरण स्थापित कर दिया।

इस प्रकार अन्य व्याधियों पर तथा उपदंश व चित्रकुष्ठ आदि पर भी उनके अनुभूत प्रयोग थे।

## कश्मीर में योग दीक्षा
## व
## महारानी पुंछ का आग्रह

श्री नारायण को योगाभ्यास की प्रबल इच्छा थी अतः उन्हें परम साधक योगी की काफी समय से खोज थी। कश्मीर में उन्होंने सुना था कि कोई महायोगी वहां आश्रम में रहते हैं। कश्मीर तो उनका अनेकों बार आना जाना होता ही था। प्रभुइच्छा से वहाँ एक सिद्ध योगी का सत्सङ्ग लाभ हो ही गया और उन्होंने उनसे योग दीक्षा ग्रहण कर ली।

महारानी पुंछ उनमें गुरुभाव रखती थी और उन से गुरुदीक्षा ग्रहण की थी। अतः अधिकांश पुंछ में रहा करते थे। महारानी पुंछ ने उनसे एक दिन यह इच्छा प्रकट की कि आप धामी छोड़ कर परिवार सहित सदा के लिये पुंछ में ही रहें मैं आपको विशाल भूमि व मकान आदि बना कर अर्पण करना चाहती हूं तथा आपके पुत्र पुत्रियों के भी यहीं अच्छे पण्डित परिवारों में विवाहादि संस्कार सम्पन्न करा दूंगी।

उन्होंने धन्यवाद पूर्वक महारानी की यह इच्छा का सम्मान करते हुए कहा कि "जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" माता और जन्मभूमि स्वर्ग से भी बढ़ कर होती है अतः मैं धामी को छोड़ कर यहां रहना उचित नहीं समझता। आपके इस सत्कार और सम्मान का मैं आभारी रहूंगा।

कुछ ही समय बाद पुंछ नरेश सर बलदेव सिंह का स्वर्गवास हो गया और श्री नारायणदत्त जी भी वापिस धामी आ गये और फिर वहां जाना कम ही होता रहा।

दैव योग से महारानी साहबा पुंछ लाहौर ठहरी हुई थीं और वहां बहुत अस्वस्थ हो गई यहां तक कि अब जीवन से भी निराशा होने लगी। अन्तिम समय में उन्होंने यह इच्छा प्रकट की कि मन्त्री को मेरा सन्देश लेकर तुरन्त धामी भेजा जाये, वह तुरन्त गुरु जी को यहां साथ ले आये। मन्त्री महोदय लाहौर से धामी पहुंचे और श्री नारायणदत्त जी के सामने महारानी की स्थिति और सन्देश प्रस्तुत किया, दूसरे दिन उन्हें साथ लेकर लाहौर पहुंच गये।

महारानी शय्या पर दयनीय स्थिति में थीं, गुरु जी के पहुंचने पर उठीं और आदर पूर्वक अपनी अन्तिम अभिलाषा प्रकट की। "गुरुदेव, अपने हाथ से केवल शीतल जल का एक गिलास पिला दीजिए जिससे अन्तर्दाह शान्त हो, किन्तु यह जल धामी से नरह्याणा (जागीर) के नाले का होना चाहिए क्योंकि बाल्यकाल में मैं वहाँ रहा करती थी।"

यह उनकी प्रार्थना किसी प्रकार भी पूर्ण नहीं की जा सकती थी क्योंकि जीवन के थोड़े ही क्षण शेष थे और धामी पहुंच कर पानी लाना कठिन था। श्री नारायणदत्त जी ने वहीं से जल का गिलास ले कर उन्हें पिलाना उचित समझा।

पानी पीने के २ घटे बाद महारानी ने देह त्याग कर दिया।

## पुंछ महारानी अटेलिया द्वारा हरिद्वार में कोटि गायत्री महायज्ञ

पुंछ नरेश सर बलदेव सिंह के राजकुमार सुखदेव सिंह उनकी मृत्यु के बाद पुंछ राज्य के सिंहासन पर बैठे और उनका विबाह राजकुमारी अटेलिया (काठियाबाड़) से हुआ। रानी अटेलिया ने भी नारायण से गुरु दीक्षा ग्रहण की थी। और वह अत्यन्त धार्मिक वृत्ति वाली तपस्विनी महारानी थी, इन के हृदय में हरिद्वार में गङ्गा जी के तट पर एक कोटि गायत्री महानुष्ठान कराने की इच्छा थी यह इच्छा व्यक्त करते हुए गुरु जी से

कहा कि वह महा अनुष्ठान तभी होगा जब आप इसका आचार्यत्व स्वीकार करें। श्री नारायण ने आचार्यत्व इस उपबन्ध पर स्वीकार किया कि मैं इस अनुष्ठान से सम्बन्धित कोई दान ग्रहण नहीं करूंगा। कारण कि महातीर्थ पर इतना महादान ग्रहण करने की शक्ति मुझ में नहीं है और मेरा इतना तप नहीं है तथा इस वृद्धावस्था में दान ग्रहणकर इसका प्रायश्चित्त नहीं कर सकता हूं। दान लेने का शास्त्रों में ब्राह्मणों का ही अधिकार लिखा है किन्तु उनका तपोमय जीवन होना चाहिए।

महारानी ने जब यह उत्तर सुना तो उनका मन अत्यन्त उदास हो गया।

इस विषय पर पुन: विचार कर श्री नारायणदत्त जी से प्रार्थना की कि आपकी दान ग्रहण करने की इच्छा नहीं है तो आपके ३ पुत्रों में से किसी एक को दान ग्रहण करने की आज्ञा प्रदान कर दें, उन्होंने यह प्रार्थना भी अस्वीकार करते हुए कहा कि मैं अपने पुत्रों को भी तीर्थ स्थान में महादान ग्रहण करने की आज्ञा नहीं दे सकता। पुत्रों के पतन से भी मेरे वंश का ही पतन होगा।

महारानी को अत्यन्त निराशा हुई और उन्होंने दान ग्रहण के लिये उचित पात्र ढूंडने की श्री नारायणदत्त से प्रार्थना की।

काफी समय से उस समय के प्रसिद्ध विद्वान् रानी रायपुर के निवासी श्री पं. बूलचन्द जी की श्री नारायणदत्त जी से घनिष्ठ मित्रता थी। धामी में भी इनका आना जाना बराबर होता रहता था। श्री पं० बूलचन्द न्याय व्याकरण, कर्मकाण्ड व पुराणों के अपूर्व विद्वान् थे। इनके बारे में महारानी से विचार विनिमय हुआ और इनको गायत्री महानुष्ठान का उपाचार्य चुन लिया गया। भारत के कोने २ से अधिकारी विद्वानों व वेदपाठियों को निमन्त्रित किया गया और गङ्गा के पावन तट पर विशाल यज्ञ शाला का निर्माण कुशल शिल्पियों द्वारा सम्पन्न हुआ। लगातार १ मास तक यह महानुष्ठान चलता रहा। कहते है गङ्गा के तट पर देवलोक का अपूर्वदृश्य बना था। वेदमन्त्रोच्चारण के मधुर स्वर से हरिद्वार का समूचा क्षेत्र गुंजित हो उठता था। प्रति दिन भण्डारा लगता था।

अनुष्ठान निर्विघ्न सम्पन्न हुआ और यज्ञान्त में माता गायत्री की विशाल स्वर्ण प्रतिमा व सुवर्ण, रजत, रत्न उपरत्न आदि से अलङ्कृत विशाल शय्या व सम्पूर्ण मण्डल श्री बुलचन्द जी को समर्पित किये गये। स्वयं केवल मात्र गुरुदक्षिणा ग्रहण का अनुष्ठान सम्पन्न करा दिया।

श्री पं. बूलचन्द जी इस अतुल सम्पत्ति को प्राप्त कर, प्रायश्चित्त न करने से कुछ समय तक स्वस्थ रहने के बाद युवा पुत्र वियोग से दुःखित जीवन यापन करते हुए वैकुण्ठवासी हो गये।

## पुस्तक संग्रह तथा बागवानी

श्री नारायण स्वाध्यायशील व तपस्वी थे। निरन्तर प्रातः ब्राह्म-मुहूर्त ४ बजे उठ कर संस्कृत के ग्रन्थों का स्वाध्याय करते थे तथा २ घण्टे पूजा और प्रतिदिन १ सहस्र गायत्री जाप किया करते थे। दिन में जन सेवा का कार्यक्रम होता था और स्वाध्याय के बाद रात्रि १२ बजे विश्राम लेते थे। स्वाध्याय शील होने के नाते इन्होंने अपने निवास स्थान में एक पुस्तकालय भी स्थापित किया हुआ था। इसमें दुर्लभ पाण्डुलिपियों और न्याय, सांख्य, वेदान्त, संस्कृत साहित्य आयुर्वेद, १८ पुराणों के ग्रन्थ संकलित थे तथा उस समय की संस्कृत हिन्दी पत्रिकाएं भी थीं। इस संग्रहालय के ग्रन्थों को यथासम्भव सुरक्षित रखने का प्रयास किया गया है।

बागवानी की ओर भी उनकी अत्यन्त अभिरुचि थी। अब से ७०-८० वर्ष पूर्व हिमाचल प्रदेश में बागवानी का कोई प्रचार न था तो उस समय उन्होंने कश्मीर से सेब चेरी, बादाम आदि के पौधे तथा लाहौर से अनार, संगतरा आदि फलदार पौधे लाकर अपने निवास स्थान में लगाये थे, जो कुछ वर्ष पूर्व ही फल देकर पूर्णायु प्राप्त कर नष्ट हुए हैं। पुष्प शोभा से भी उन्हें अत्यन्त लगाव था। लाहौर से ही अनेक प्रकार के पुष्प गुलाब, मोतिया वेदमुश्क आदि पौदे लाकर एक सुन्दर पुष्प वाटिका भी बनाई थीं जिस में से कुछ पौदे अब तक हैं।

उन्होंने अपने उद्यान के फल और पुष्पों के विक्रय पर प्रतिबन्ध

लगाया हुआ था। केवल उपहार के रूप में ही फलों और पुष्पों का वितरण होता था।

## काल ज्ञान

श्री नारायणदत्त जी का यह नियम था कि जब उन्हें कोई मान्य व्यक्ति चिकित्सा के लिये आमन्त्रित करता था तो वह शास्त्रोक्त काल-ज्ञान के बिना समय निकाले चिकित्सा के लिये निश्चय नहीं करते थे। एक बार रामपुर बुशहर के राजपरिवार के श्री रघुनाथ सिंह जी अत्यन्त अस्वस्थ हो गये। उस समय चिकित्सा के क्षेत्र में उनका नाम सर्वत्र विख्यात हो चुका था। जब श्री रघुनाथ सिंह जी के जीवन की आशा धूमिल हो गई तो किसी प्रकार उनके द्वारा चिकित्सा करवाने के प्रयत्न किये गये। वह उस समय धामी प्रशासनिक राज्य परिषद् के अध्यक्ष थे। अतः रामपुर बुशहर प्रशासन ने सुपरिटेण्डेण्ट हिल स्टेट्स को पत्र लिख कर निवेदन किया कि वे श्री नारायणदत्त को रामपुर आने के लिये आज्ञा ही नहीं बल्कि आग्रह भी करें कि वे अवश्य चिकित्सा हेतु रामपुर जाना स्वीकार कर लें।

साथ यह भी लिखा कि वे जो फीस चाहेंगे दी जायेगी तथा धामी से रामपुर तक घोड़े या पालकी में यात्रा की जैसा वह अनुकूल समझेंगे व्यवस्था कर दी जायेगी।

सुपरिटेंडेण्ट का पत्र पढ़कर श्री नारायणदत्त जी ने उत्तर भेजा कि मैं एक सप्ताह के पश्चात् ही रामपुर जा सकूंगा कारण कि कुछ आवश्यक प्रशासनिक कार्य निपटाने शेष हैं। किन्तु उन्होंने अपने निजी विश्वस्त व्यक्तियों और मित्रों के पास यह व्यक्त कर दिया था कि रोगी की आयु शेष नहीं है, इसलिये केवल मात्र धन लोभवश अपमानित होने के लिए चिकित्सा हेतु जाना उचित नहीं है। परिणाम स्वरूप सप्ताह के मध्य रुग्ण का देहान्त हो गया। यह काल-ज्ञान का ही चमत्कार था। इस प्रकार के अनेकों चमत्कार उनके जीवन में बराबर होते रहे।

## परकाय प्रवेश की यौगिक प्रक्रिया का चमत्कार

श्री नारायणदत्त जी ने परकाय प्रवेश की यौगिक प्रक्रिया की

# सम्पादकीयम्

## श्री राजीवगान्धिनः—निर्ममहत्या

अस्य मई मासस्य २१ तमेदिवसे प्रातरेव सर्वत्र प्रसृत: समाचारोऽयं यत् श्री राजीवगांधी बममहिलया हत: । कस्यापि हननस्य इयं नवीना सरणिर्निष्कासिता ऽभूत् । एष आतंकवादो न देश हिताय न च विश्वहिताय ।

भारतीय संस्कृतेर्मूलमन्त्रेणैव एव विधा हत्या:- अपाकर्तुं शक्यन्ते ।

अयंनिजः परो वेति गणना लघुचेतसाम् ।
उदार चरितानान्तु वसुधैव कुटुम्बकम् ।।

सन्देशोऽयं भारतीयसंस्कृत्या एव वर्तते । अत एवं विधनृशंसहत्यायाः यावती निन्दा क्रियेत सा स्वल्पा एव । वयमस्मिन् दुःखदक्षणे श्री गान्धिपरिवारेण साकं सहानुभूतिं प्रदर्शयामः । श्री नेहरू प्रभृति श्रीमती इन्दिरागान्धि यावत् तस्याः पश्चाच्च श्री गांधिना राजीवेनापि हिमाचलप्रदेशस्य सत्यनिष्ठोपरि विश्वासधारकजनानां हिमाचलीयानां च कृते पूर्णं सहयोगप्रदानमकारि । नो चेत् पञ्चशतसंख्यकलोकसभायां तादृशं कः पृच्छेत् यतः चत्वार एव लोकसभासदस्याः भवन्ति । अस्तु नाम । वयं कर्तुमकर्तुमन्यथाकर्तुं शक्तस्य प्रभोरग्रे प्रार्थयामो यत्तं युवकनेतारम्—यो हि सर्वथा देशसेवक—आसीत्सद्गतिं प्रयच्छेत् घातकान् च सद्बुद्धि येनातंकवादस्य समाप्तिर्भवेत—लोकाश्च परस्परं मैत्रीभावेन जीवनयापनं कुर्युः ।

एकबारं पुनः दिव्यज्योतिपरिवारः स्वीयां समवेदनां प्रकटयति ।

— केशव शर्मा



R. N. 6384/57 ल - 33/एस एम. / 10/91

# दिल्ली संस्कृत अकादमी, दिल्ली प्रशासन

कमरा नं० २२४, पुराना सचिवालय, दिल्ली

## मौलिक संस्कृत साहित्य रचना पुरस्कार योजना



भारतवर्ष के संस्कृत भाषा के कवियों, लेखकों, नाटककारों, कहानीकारों तथा बाल साहित्य लेखकों से वर्ष १९९१ के लिए मौलिक संस्कृत साहित्य रचना पुरस्कार योजना के अन्तर्गत भाषा को मौलिक तथा अपुरस्कृत पुस्तकें आमंत्रित की जाती हैं। पुरस्कारों का विवरण निम्नानुसार है :—

| क्र. सं. | पुरस्कार का नाम | संख्या | राशि |
|---|---|---|---|
| १. | पंडित जगन्नाथराज संस्कृत पद्य रचना पुरस्कार | १ | रु. ७०००/- |
| २. | पंडित चारुदेव शास्त्री, संस्कृत गद्य रचना पुरस्कार | १ | रु ७०००/- |
| ३. | डा. आदित्य नाथ झा. संस्कृत नाट्य पुरस्कार | १ | रु. ७०००/- |
| ४. | पंडित दीनानाथ शास्त्री संस्कृत आलोचनात्मक पुरस्कार | १ | रु. ७०००/- |
| ५. | अब्दुल रहीम खानखाना विविध संस्कृत साहित्य पुरस्कार | १ | रु ७०००/- |
| ६. | डा. गोस्वामी गिरधारी लाल शास्त्री संस्कृत कथा साहित्य पुरस्कार | १ | रु. ७०००/- |
| ७. | पंडित परमेश्वरानन्द बाल संस्कृत साहित्य पुरस्कार | १ | रु. ७०००/- |

सभी रचनाओं का प्रकाशन १९८८ एवं १९८९ वर्ष का ही मान्य होगा।

१. आवेदन पत्र का फार्म तथा विस्तृत नियम अकादमी कार्यालय से प्रत्येक कार्यदिवस पर प्रातः १० बजे से सायं ५ बजे के बीच प्राप्त किए जा सकते हैं अथवा डाक द्वारा भी मगाए जा सकते हैं। आवेदन पत्र प्राप्त करने की अंतिम तिथि ३०-५-९१ है।

२. जिन लेखकों, कवियों साहित्यकारों तथा नाटककारों ने अपनी प्रविष्टियां पूर्व ही भेज दी हों उन्हें अब प्रविष्टियां भेजने की आवश्यकता नहीं है।

— बालकृष्ण सेमवाल

सचिव,